ह्रीं श्री ह्री श्री सिद्धाइपाद,
ह्रीं श्रीं ह्री श्री वद्धाइपाद ।
ह्रीं श्री ह्रीं श्री शिवाइपाद ।
ह्री श्री ह्री श्री श्रीइच्छाइपाद ।
ह्रीं श्री ह्री श्रीं आईपाद ।
ह्रीं श्री ह्रीं श्री वीराइपाद ।
ह्रीं श्री ह्रीं श्री त्रिभुवनापाद ।
ह्रीं श्री ह्रीं श्री वराहरूपाइपाद ।
ह्रीं श्री ह्रीं श्री कृतयुगा चैव ।
तथा त्रेताद्वापरकलिमेव च ।
चतुर्युगेषु देवेशि क्षत्रजा सिद्धिपूजिता ॥ १८ ॥
ह्री श्रीं पादान्तु आदौ तु तथा नाममुदीरयेत् ।
क्षत्रजा कथिता देवि पीठजा[:] कथयामि ते ॥ १९ ॥
प्रथमं पीठमुत्पन्नं कामाख्यानाम सुव्रते ।
उपपीठस्थिता सप्त देवीनां सिद्ध-आलयम् ॥ २० ॥
पुनः पीठं द्वितीयन्तु संज्ञा पूर्णगिरि प्रिये ।
ओडियान महापीठमुपपीठसमन्वितम् ॥ २१ ॥
अर्व्वुदमर्द्धपीठन्तु उपपीठसमन्वित[म्] ।
पीठोपपीठसन्दोहं क्षत्रोपक्षत्रमेव च ।
पीठाद्यादेवतानां च शृणु पूजाविधिं प्रिये ॥ २२ ॥
ह्रीँ श्रीँ ह्रीँ श्रीँ महालक्ष्माइ पाद ।
ह्रीँ श्रीँ ह्रीँ श्रीँ कुसुमानङ्गाइ पाद ।
ह्रीँ श्रीँ ह्रीँ श्रीँ शुक्लाइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ प्रलम्बाइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ पुलिन्दाइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ शवराइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ कृष्णाइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ लच्छाइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ नन्दाइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ भद्राइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ कलम्बाइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ चम्पाइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ धवलाइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ हिडिम्बाइपाद ।

ह्रीँ श्रीँ ह्रीँ श्रीँ महामायाइपाद ।

पीठोपपीठसन्दोहे ये जाता वरयोगिनी ।
एतैस्तु पूजिता भद्रे सर्व्वे सिध्यन्ति मातराः ॥ २३ ॥

योगाभ्यासेन ये सिद्धा मन्त्राणामाराधनेन तु ।
योगेन योगजा माता मन्त्रेण मन्त्रजा प्रिये ॥ २४ ॥

सहजा मातरा देव्या रूरूयुद्धैर्महाबलाः ।
भक्षितं तु चरुं दिव्यं सप्तजन्मान्तिकं पशुम् ॥ २५ ॥

तेषां गर्भे प्रसूतानां निर्य्यासप्राशितेन च ।
गर्भे जातेन देवेशि गर्भं जानन्ति आत्मनः ॥ २६ ॥

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही वज्रहस्ता च तथा योगेश्वरीति च ॥ २७ ॥

Ms. हितिम्बाइ ; 25. चरू ; 26. गर्भ ।

अघोरेशी च विख्याता मातर्य्यो व्यापकाः स्मृता [ः] ।
तथान्या द्वारपालिन्या तैस्तु संव्यापितञ्जगत् ॥ २८ ॥
पञ्चजातक्रमे चान्या नगरे ग्रामेषु सर्व्वशः ।
सर्व्वास्तां पूजयेन्नित्यं गुरुसिद्धसमन्विताम् ॥ २९ ॥
ग्रहा नागाश्च देवाश्च योगिन्यः सिद्धमेव च ।
पूजितां पूजयन्त्येते निर्द्वंद्वं त्यपमानिताः [?] ।
कुलाष्टकं प्रवक्ष्यामि अष्टाष्टकविधि प्रिये ॥ ३० ॥

ह्रीँ आ ह्रीँ ह्रीँ इ ह्रीँ ह्रीँ ऊ ह्रीँ ह्रीँ ॠ ह्रीँ ह्रीँ लृ ह्रीँ ह्रीँ ऐं ह्रीँ ह्रीँ ॐ ह्रीँ ह्रीँ ह्रीँ अः ह्रीँ
प्रथमन्तु इमं देवि शृणु विद्यायमष्टकम् ।
ह्रीँ क्षः ह्रीँ लः ह्रीँ हः ह्रीँ सः
ह्रीँ षः ह्रीँ शः ह्रीँ व ह्रीँ र
विद्यापदाष्टकाख्यातम् । ह्रीँ क्ष ह्रीँ एतत् कौलिकं भैरवि ।

अष्टधा तु लिखेद्विद्या प्रथमाष्टकभेदितम् ।
यथा एतत् तथा सर्व्वं ज्ञातव्या योगिनीक्रमम् ॥ ३१ ॥
अष्टाष्टकं विधानेन चतुःषष्टि यथाक्रमम् ।
योगिनीमेलकं चक्रं अणिमादिगुणाष्टकम् ॥ २३ ॥
भवत्येव न सन्देहो ध्यानपूजारतस्य च ।
द्वितीयन्तु महाचक्रं सर्व्वाकृष्टिप्रवर्त्तकम् ॥ ३३ ॥
पशुग्रहणमावेशं पूजाध्यानरतस्य च ।
तृतीयन्तु महाचक्रं परकायप्रवेशनम् ॥ ३४ ॥
अतीतानागतञ्चैव अभ्यासाद्भवते प्रिये ।
लभत्येव न सन्देहो विविधं यत् समीहितम् ॥ ३५ ॥

Ms. 35. विविध ;

चतुर्थं शान्तिकचक्रं मुक्तमुक्तिप्रदं शुभम् ।
पूजयित्वा इमं चक्रं यावद् ध्यानं प्रयुञ्जति ॥ ३६ ॥
क्षणेन भवते स्तोभो मुद्राबन्धत्यनेकधा ।
भाषास्तु विविधाकारा अश्रुतानि श्रुतानि च ॥ ३७ ॥
उच्चरेदङ्कमयं शास्त्रं मन्त्रजालानि श्रूयते ।
स्वयमेवात्मनात्मने श्रूयते चात्मनात्मनि ॥ ३८ ॥
षण्मासाद् भवते सिद्धिमनिशी[?] योगिनीप्रिये ।
बलीपलितनिर्म्मुक्तः कामदेवो द्वितीयकः ॥ ३९ ॥
पञ्चमन्तु महाचक्रं ध्यानपूजाक्रमेण तु ।
वाग्वादेर्नाशयेद्वाचां मूकवत् तिष्ठते तु सः ॥ ४० ॥
षष्ठं चैव महाचक्रं धर्म्मार्थकाममोक्षदम् ।
सप्तमश्चक्रं देवेशि सैन्यस्तम्भकरं परम् ॥ ४१ ॥
स्तोभावेशादिकं चक्रं संसारबन्धमोचकम् ।
दूराच्च दर्शनं तस्मिन् पूजाध्यानरतस्य तु ॥ ४२ ॥
अष्टमं चक्रमुद्दिष्टं इच्छासिद्धिप्रवर्त्तकम् ।
मारणोच्चाटनं भद्रे स्तम्भमोहादिकं प्रिये ॥ ४३ ॥
वदनोतिष्ठमहाचक्रं कुलभक्त्यामधिष्ठितम् ।
अष्टाष्टकविधानन्तु ज्ञात्वा सिध्यति नान्यथा ॥ ४४ ॥
तत्तेषां गूढसद्भावं चतुःषष्टियोगिनीक्रमम् ।
निःसन्दिग्धं मया प्रोक्तं हि भक्तियुक्त्यावधारय ॥ ४५ ॥

इति ज्ञाननिर्णितियोगिनीकौलम्महच्छ्रीमच्छन्नपादावतारिते
चन्द्रद्वीपविनिर्गते अष्टमः पटलः ।

---

Ms. 36. चतुर्थ ; 38. दङ्कहये ; 39. बङि ; 43. प्रवक्तकं ।

## नवमः पटलः

भैरव उवाच—

गुरुपङ्क्तिं प्रवक्ष्यामि सिद्धपङ्क्तिं सुलोचने।
योगिनीपङ्क्तिविन्यासं कथयामि तव प्रिये॥ १॥
सर्व्वसिद्धियोगिनीनां खेचरीं सर्व्वमातरीम्।
सर्व्वभूचरीसर्व्वगोचरयोगिनीनां सर्व्वक्षत्रकम्॥ २॥
सर्व्वमन्त्रजाः सर्व्वयोगजाः सर्व्वपीठजाः।
सर्व्वसहजाः सर्व्वकुलजा सर्व्वद्वारपालिकाः॥ ३॥
सर्व्वगर्भजाः कृते च द्वापरे त्रेते कलियुगे महातपे।
चतुर्युगविभागेन योगिनीसिद्धिपूजिताः॥
गुह्यानां परमं गुह्यन्तव भक्त्या प्रकाशितम्॥ ४॥

देव्युवाच—

सुदग्धमग्निना देहम् अद्य निर्वापितं परम्।
तव प्रसादात् कौलेश ज्ञातोऽहम् ज्ञाननिर्णयम्।
साम्प्रतं श्रोतुमिच्छामि गुरुभ्यः सिद्धपूजनम्॥ ५॥

भैरव उवाच—

गुरुसिद्धिविधे देवि शृणु त्वं कुलभाविनि।

श्रीविश्वपादान्। [श्री] विचित्रपादान्। श्रीश्वेतपादान्। श्रीभट्टपादान्। श्रीमत्स्येन्द्रपादान्। श्रीब्रह्मीषपादान्। श्रीविंध्यपादान्। श्रीशबरपादान्। श्रीमहेन्द्रपादान्। श्रीचन्द्रपादान्। श्रीहिडिनिपादान्। श्रीसमुद्रपादान्। श्रीलवणपादान्। श्रीदुम्बरपादान्। श्रीदेणपादान्। श्रीधीवरपादान्। श्रीसिंहल-

Ms. 5. ज्ञातेसं।

पादान्। [श्री]ओगिनीपादान् गुरु परमगुरु परमेष्ठ्य पूज्य महापूज्य लाकिनी डाकिनी शाकिनी काकिनी याकिनी—

ह्रींकारमादितः कृत्वा श्रीकारं चैतदनन्तरम्।
अक्षरद्वयविन्यासमन्यन्तेषु प्रदापयेत्॥ ६॥
एतत् सिद्धाश्च योगिन्या अस्मिन् सिद्धाः कुलागमे।
अनेन सदृशं ज्ञानं न भूयो न भविष्यति॥ ७॥
कलियुगे महाघोरे रौरवेऽत्यन्तभीषणे।
सञ्जाताः षोडश सिद्धा अस्मिन् कौले सुलोचने।
कृते च द्वापरे त्रेते सिद्धास्ते वीरवन्दिताः।
तेषां नामविधिं वक्ष्ये शृणु त्वं वरलोचने॥ ८॥

मृष्णिपादाः। अवतारपादाः। सूर्य्यपादाः। द्युतिपादाः। ओमपादाः। व्याघ्रपादाः। हरिणिपादाः। पञ्चशिखिपादाः। कोमलपादाः। लम्बोदरपादाः।

एते पूर्व्वमहासिद्धाः कुलकौलावतारकाः।
चतुर्युगेति देवेश स्वतन्त्र-कुलचोदका [:]॥ ९॥
अस्य ज्ञानप्रभावेण बहवः सिध्यन्ति मानवाः।
दशकोटिप्रमाणन्तु इ[द]म् कौलं परोद्भवम्॥ १०॥
सारात्सारतरं भद्रे महाकौलस्य शोभने।
इच्छाख्या योगिनी सिद्धैर्मायान्तं पर-इच्छया॥ ११॥
खेचरीणां पुनः पश्चादिच्छया प्रकटीकृतम्।
मातराणां पुनर्देवि खेचरैः कथितं प्रिये॥ १२॥

मातराणि गमिष्यन्ति भूचरीणां कुलेश्वरि ।
भूचरीणां सुभक्ताणां भूचरी कथितं प्रिये ॥ १३ ॥
योगिनीनां कुले जातौ लभते कौलिकी स्फूटम् ।
चतुरशीति सहस्त्रे पु योनियन्त्रेषु पीडिताः ॥ १४ ॥
पुण्यात्मानं कुलाश्चर्य्यं पश्चाज् ज्ञानमिमां लभेत् ।
भुक्तिमुक्तिमहासिद्धिः योगिनीनां प्रियो भवेत् ॥ १५ ॥

इति ज्ञाननिर्णीतियोगिणीमहाकौलम्महच्छ्रीमच्छन्नपादावतारिते
चन्द्रद्वीपविनिर्गते नवमः पटलः ।

———

## दशमः पटलः



देव्युवाच—

अद्य मे सफलं नाथ मम पिण्डं सुरेश्वर।
वह्निनावेष्टितात्मानमेकपादेन संस्थितम्॥ १॥
तत्तपः सफलं मेऽद्य त्वया तुष्टेन भैरव।
ज्ञानस्य निर्णयन्देव अद्य मे प्रकटीकृतम्॥ २॥
पुनः पृच्छामि कौलेश यथातथ्यं वद प्रभो।
अष्टाष्टकविभागन्तु परिज्ञातुमनन्तथा॥ ३॥
अद्यापि संशयो नाथ तेषां चक्रं पृथक् पृथक्।
गुह्यस्थानं यथाचक्रं क्षिप्रं सिध्यति भैरव॥ ४॥
स्थानध्यानफलन्तेषां संक्षेपं कथ्यते प्रभो।

भैरव उवाच—

साधु साधु महादेवि पृष्टोऽहं सुरदुर्लभम्॥ ५॥
कथयामि न सन्देहो भक्तियुक्ता वरानने।

लां लीं लूं लृं ऌं लैं लौं लः। हां हीं हूं हृं ह्लृं हैं हौं [हः]। सां सीं सूं सृं स्लृं [सैं] सौं सः। षां षीं षूं षृं ष्लृं षैं षौं षः। शां शीं शूं शृं श्लृं शैं शौं शः। वां वीं वूं वृं व्लृं वैं वौं वः। ह्लां ह्लीं ह्लुं ह्लृं ह्लैं ह्लौं ह्लः॥

क्षकारं ब्रह्मरन्ध्रत्वं लंकारन्तु ललाटयोः॥ ६॥
हकारन्तु भ्रुवोर्मध्ये सकारं वक्त्रमण्डले।
षकारं कण्ठदेशे तु शकारं हृदये तदा॥ ७॥

वकारं नाभिमध्ये तु हकारं विसकन्दयो [:]।
स्थानचक्रास्तु संप्रोक्तास्तेषां ध्यानं शृणु प्रिये ॥ ८ ॥
शुद्धस्फटिकसङ्काशं ऊर्द्धं तेजसुनिर्म्मलम्।
अष्टारं पङ्कजं दिव्यं प्रथमाष्टकभूषितम् ॥ ९ ॥
सर्व्वद्वन्द्वविनिर्मुक्तं क्रोधाद्यैः शून्यवर्ज्जितम्।
अभ्यासात् समचित्तस्तु ग्रामधर्म्मञ्च वर्ज्जयेत् ॥ १० ॥
अतीतानागतञ्चैव वर्त्तमानन्तथैव च।
दूराश्रवणविज्ञानं पाशस्तोभन्तथा प्रिये ॥ ११ ॥
पशुग्रहणमावेशं मृत्युनाशन्तथैव च।
अमरत्वन्तथा देवि समासात् परिवर्त्तनम् ॥ १२ ॥
वाचा सिद्धिर्भवत्येवं किं कुर्व्वाणं जगत्प्रिये।
द्वितीयमष्टपत्रन्तु तेजध्यानसुदीपितम् ॥ १३ ॥
आगमान्नाशयेन्मृत्युं पुरक्षोभादिकारकः।
कुरुते बहुधा रूपं ध्यानैकगतचेतसः ॥ १४ ॥
मण्डलीकनरेन्द्राणां किं कुर्व्वाणो विधीयते।
क्रुद्धस्तु संहरेत् सर्व्वं त्रैलोक्यं सचराचरम् ॥ १५ ॥
सृष्टिसंहारकर्त्तारं नित्याभ्यासरतः सदा।
तृतीयन्तु महाचक्रं नवतत्त्वप्रमोचकः ॥ १६ ॥
षण्मासादीप्सितं कामं ध्यात्वाधारन्तु तद्गुरुः।
बलीपलितनाशन्तु सुदूराद्दर्शनन्तथा ॥ १७ ॥
वेधन्तु कुरुते देवि योजनानां शतैरपि।
एकान्ते बहुधा रूपं कुरु ध्यानञ्च तत्परः ॥ १८ ॥

---

Ms. 8. विषः।

चतुर्थशान्तिकं चक्रं सुखप्रीतिविवर्द्धनम् ।
कुरुते अमरत्वं हि सतताभ्यासतत्परः ॥ १९ ॥
वाचयो कुरुते मृत्युं रोगाणान्तु जयं प्रिये ।
दिवसान्नाशनेनैव वयो मृत्युं गमिष्यते ॥ २० ॥
नाशयेदहो[रा]त्रेण एतच्चक्रमनुत्तमम् ।
सतताभ्यासयोगेन द्विरष्टवर्षाकृतिर्भवेत् ॥ २१ ॥
अष्टपत्रं महापद्मं पञ्चमं सुरसुन्दरि ।
धूम्रवर्णं सदा चिन्त्य त्रैलोक्यं चालयेत् प्रिये ॥ २२ ॥
वाचापहारं कुरुते सैन्यस्तम्भकरं परम् ।
षष्ठं तु चक्रं राजानमष्टपत्रसकर्णिकम् ॥ २३ ॥
तप्तचामीकरप्रभमिच्छासिद्धिप्रवर्त्तकम् ।
अतीतानागतञ्चैव अणिमादिगुणाष्टकम् ॥ २४ ॥
ददते नात्र सन्देहो भक्तिध्यानप्रदीपितः ।
सप्तमन्तु महादेवि पूर्णचन्द्रप्रभं प्रिये ॥ २५ ॥
तद्गतन्तन्मनं भद्रे भुक्तिमुक्तिप्रदं शुभम् ।
जरामृत्युविनाशञ्च परदेहे प्रवेशनम् ॥ २६ ॥
किं कुर्व्वाणविधेयस्तु मण्डलीकनरोत्तम[ः] ।
अष्टमन्तु महाचक्रं पत्राष्टकविभूषितम् ॥ २७ ॥
धर्म्मकामार्थमोक्षञ्च ददत्येव सुलोचने ।
रक्तध्याने सदावश्यं पीतस्तम्भकरं परम् ॥ २८ ॥
शुक्लमाध्यायन देवि स्फटिके मोक्षदायिकम् ।
कृष्णेन मारणं प्रोक्तं धूम्रमुच्चाटने सदा ॥ २९ ॥

---

Ms. 21. र्भवत् ; 22. त्रैलोक्य ; 28. रक्त ।

गोक्षीरधारधवलं एतन्मृत्युञ्जयो हितम् ।
पुरःक्षोभन्ततस्तोभं कम्पपातादिकं चरेत् ॥ ३० ॥
अग्निज्वाला सुदीप्ताभं ध्यानं चैवाष्टमं सदा ।
एकैकस्य स्थितन्देवि एतद्ध्यानन्तु अष्टधा ॥ ३१ ॥
चापश्च कञ्चुकी देवि प्रणिपत्य मुहुर्मुहुः ।
अद्य मे सफलं जातम्महाकौलेषु भैरव ॥ ३२ ॥

इति ज्ञाननिर्णितियोगिनीकौलम्महच्छ्रीमच्छम्नपादावतारिते चन्द्रद्वीप-
विनिर्गते दशमः पटलः ॥

---

Ms. 30. चयेत् ।

# एकादशः पटलः

देव्युवाच—

कथयस्व महादेव चरुकाद्वैतलक्षणम् ।
सर्व्वशङ्काविनिर्म्मुक्तं निःशङ्कं सिध्यते ध्रुवम् ॥ १ ॥

भैरव उवाच—

यत्त्वया पृच्छितं देवि लोकेऽस्मिन् क्रूरभीषणे ।
कथयामि निःसन्देहं सर्व्वशङ्काविमर्द्दकः ॥ २ ॥
अद्वैते नित्ययुक्तस्य तस्य सिद्धिः प्रजायते ।
द्वैतन्तु कारयेद्यस्तु आक्रुष्टो योगिभिस्तु सः ॥ ३ ॥
समयाद् भ्रष्टन्तु यो देवि स पशुर्नात्र संशयः ।
द्वैतभावं परित्यज्य अद्वैताचारभावितः ॥ ४ ॥
पञ्चामृतं प्रवक्ष्यामि गुह्यानां गुह्यमुत्तमम् ।
ज्ञातव्यं कुलसमयं कुलपुत्रैर्विशेषतः ॥ ५ ॥
साधकैः सिद्धिकामैस्तु तथान्यं कुलदेशिकैः ।
अनुष्ठितमिदं पूर्व्वं कुलसिद्धैः सुलोचने ॥ ६ ॥
एतज्ज्ञात्वा भवेत् सिद्धिर्मानसी योगिनीप्रिये ।
यदिच्छेत् कौलत्री सिद्धिः प्राप्य पञ्चामृतं परम् ॥ ७ ॥
तदा सिध्यति योगिन्यां सिद्धिमेलापकं भवेत् ।
ददन्ते च तदा देवि चरुकं पञ्चभिर्युतम् ॥ ८ ॥
योगिनीभिः सकृद्दत्तं तत्क्षणात् तत्समो भवेत् ।
अथ वा प्राशयेज्ज्ञात्वा योगयुक्तस्तु कौलवित् ॥ ९ ॥

सिध्यते नाल सन्देहो विघ्नजालविवर्जितम् ।
योगिनीगणसामान्यामनः सुचिन्तितं भवेत् ॥ १० ॥
विष्ठं धारामृतं शुक्रं रक्तमज्जाविमिश्रितम् ।
एतत् पञ्च पवित्राणि नित्यमेव कुलागमे ॥ ११ ॥
नित्यनैमित्तिकं देवि कर्त्तव्यं च प्रयत्नतः ।
गोमांसं गोघृतं रक्तं गोक्षीरञ्च दधिन्तथा ॥ १२ ॥
नैमित्तिके इमं कुर्य्यात् सिद्धिकामे महोत्सुकः ।
निःशङ्को निर्व्विकल्पस्तु एतत् कुर्य्यात् कुलागमे ॥१३॥
अन्यथा नैव सिध्यन्ति निर्मुक्तिस्तु मम प्रिये ।
पुनरन्यविशेषणं शृणुष्वैकाग्रमानसः ॥ १४ ॥
श्वानमार्ज्जार-उष्ट्रञ्च शृगालञ्च हयन्तथा [?] ।
कूर्म्मकच्छवराहञ्च मार्ज्जारवककर्क्कटम् ॥ १५ ॥
शलाकी कुकुटश्चापि बहु[?]नानाकुलन्तथा ।
शेरकञ्च मृगं चापि महिषं गण्डकं तथा ॥ १६ ॥
अन्यानि यानि मच्छानि यथालाभं समाहरेत् ।
विज्ञानम्बलसामर्थ्यं सप्तजन्मान्तिकं पशु ॥ १७ ॥
येन तेन प्रकारेण आकृष्टिं भक्षयेत् सदा ।
पूजयेद् योगिनीवृन्दं भक्ष्यभोज्यादिभिः प्रिये ॥ १८ ॥
धारापानन्ततः कुर्य्याद् यदीच्छेच्चिरजीवितुम् ।
पिशितं त्रिविधं कुर्य्यात् पक्वाम्लमधुरन्तथा ॥ १९ ॥
देवतातर्पणार्थाय सुरा देया यथोचिता ।
वृक्षजा मूलजा चैव पुष्पजा फलजापि वा ॥ २० ॥

Ms. 17. मच्छानि ; 18. भक्ष ; 20. यथोक्तिता ।

पेष्टी माध्वी तथा गौण्डी दद्यान्नैमित्तिके प्रिये ।
अद्वैतन्तु यथाख्यातं कर्त्तव्यं नान्यथा न हि ॥ २१ ॥
अद्वैताचारमास्तृत्य यदान्यश्चरति पापकृत् ।
पतन्ति नरके घोरे अवीचिरौरवे तथा ॥ २२ ॥
अद्वैतं येन सन्त्यक्तं ममाभाष्यन्तु[?] तं पशुम् ।
योगिनीगणमध्यस्थं स पशुः कीर्त्तितं कुले ॥ २३ ॥
गुप्तं गुप्ततरं कुर्य्याद् गोपनीयं प्रयत्नतः ।
जननीजारगर्भन्तु स्वपुत्रं गोपयेद्यथा ॥ २४ ॥
अद्वैतं गोपयेन्नित्यं सुगोप्यमभ्यसेत् क्रमात् ।
अणिमादिगुणैश्वर्य्यसिद्धिश्च मानसी भवेत् ॥ २५ ॥
स्वयं गुरुः स्वयं सिद्धः स्वयं शिष्यः स्वयं शिवः ।
अज्ञानबन्धनाशेयं ज्ञानं ज्ञेयं विमोचनम् ॥ २६ ॥
सुगन्धं पूतिगन्धञ्च नित्यं गृह्णाति निष्कलः ।
पद्मपत्रे यथा तोये तथा चैवं न लिप्यते ॥ ॥ २७ ॥
तद्वन्न लिप्यते योगी पुण्यपापैः सुरेश्वरि ।
ब्रह्महत्यादिकं पापम् अश्वमेधादिकं फलम् ॥ २८ ॥
सर्व्वतीर्थाभिषेकश्च म्लेच्छादिस्पर्शनेन तु ।
एतैर्न गृह्यते योगी क्रियमाणैरपि स्फुटम् ॥ २९ ॥
समत्वं वीतरागत्वमुदासीनां ख-वृत्तिनाम् ।
निष्परिग्रहसन्तोषं द्वन्द्वयोगं न कारयेत् ॥ ३० ॥
कामक्रोधञ्च दम्भञ्च त्यजेल्लोभं शनैः शनैः ।
न चरुन्निन्दयेद्भद्रे समयाद्वैतमेव च ॥ ३१ ॥

Ms. 22. मास्तृत्यं ; 25. मणिमादि ; 30. क-वृत्तिनं ।

यस्मिन्निष्पद्यते पिण्डं रक्तशुक्रं पिबेत् सदा ।
सिद्धानां योगिनीनाञ्च इमश्चरुम्प्रियं सदा ॥ ३२ ॥
शाकिनीनां प्रियं मासं देवीनाञ्च प्रियं शृणु ।
वृकपुष्पं शिवाम्बुञ्च रक्तशुक्रं सुरान्तथा ॥ ३३ ॥
ब्रह्मनिष्ठीवनाद्यञ्च सौरभ्यं पुष्पकादिकम् ।
गन्धं धूपञ्च गेयञ्च ताम्बूलं रक्तवाससम् ॥ ३४ ॥
रत्नाद्यं रक्तवर्णञ्च सिद्धानां देवता प्रिये ।
विज्ञानोन्मीलनम्भद्रे भवत्येवं नान्यसेवनात् ॥ ३५ ॥
शाकरं यन्न कुर्व्वीत जन्महीनवरास्त्रियै ।
लौल्यार्थी चपला नित्यं कुलशास्त्रविडम्बकम् ॥ ३६ ॥
स्वशक्तिदर्शनाद्रक्तं स्पर्शनाल्लक्षणेन तु ।
कुलविज्ञानसंभोगात् षण्मासात् सिद्धिभाजनः ॥ ३७ ॥
आदिमन्त्रविनिर्मुक्तं शिवाम्बु ब्रह्ममेव च ।
प्राशयेत् तत् सदा कालं योगिनीमेलको भवेत् ॥ ३८ ॥
पादप्रक्षालनन्तेन नित्यं तत् तथैव च ।
मुखप्रक्षालनं नित्यं ब्रह्मणोर्द्धगतम्प्रिये ॥ ३९ ॥
कुण्डगोलोद्भवन्नैव तिलकं कारयेत् सदा ।
अशीतिं नाशयेद्वातान् कुष्ठव्याधिन्तु नाशयेत् ॥ ४० ॥
मुच्यते सर्व्वरोगैश्च यथा सर्पस्य कञ्चुकम् ।
उदयार्कसमस्तेजन्नित्यं वै योगिनीप्रियम् ॥ ४१ ॥

---

Ms. 34. सौरभ्यः ; 36 बितम्बकं ; 37. षड ; 40. नैव ।

त्रैलोक्यं वश्यतां याति ब्रह्मादयो दिवौकसः।
चरुकाद्वैतमाचारं मन्त्रजैः [?] सह भोजनम् ॥ ४२ ॥
सर्व्वं समाचरेद् देवि इच्छाशक्तेरधिष्ठितम्।
इच्छां विना न कुर्य्यात्तु बलात्कारेण तश्चरम्।
चरुकाद्वैतमाचारं कथितं ज्ञाननिर्णयम् ॥ ४३ ॥

इति ज्ञाननिर्णितियोगिणीमहाकौलस्मह च्छ्रीमच्छम्रपादावतारिते
चन्द्रद्वीपविनिर्गते एकादशः पटलः।

---

## द्वादशः पटलः

देव्युवाच—

रोमाञ्चकञ्चुका देवि हृष्टसन्तुष्टचेतसः ।
भक्ष्याणान्तु समुत्पन्नं पुनः पृच्छामि भैरव ॥ १ ॥
अव्याहं कुलसमयमव्याहं लक्षणान्वितम् ।
साम्प्रतं श्रोतुमिच्छामि पात्राणां चर्य्यलक्षणम् ॥ २ ॥

भैरव उवाच—

शृणु त्वं वीरचामुण्डे पात्राणां चर्य्यलक्षणम् ।
प्रथमं बालरूपेण द्वितीयम् उन्मत्तकाकृतिम् ॥ ३ ॥
तृतीयं राजरूपेण चतुर्थं कश्मलं प्रिये ।
स्वातन्त्रं पञ्चमं देवि षष्ठञ्च वीरनायकम् ॥ ४ ॥
गन्धर्व्वसप्तमन्नाम नग्नं चैवाष्टकं प्रिये ।
त्रिदण्डश्चैव देवेशस्तथान्यं वेदविक्रयम् ॥ ५ ॥
यां यान्तु कुरुते इच्छां तां ताञ्चैव व्रतं प्रिये ।
अकुलञ्च कुलं ज्ञात्वा कुलं देव्या सुभामिनि ॥ ६ ॥
भैरवं पूजितव्यञ्च कुलैः सिद्धिसमन्वितम् ।
स्वगुरुं पूजयेन्नित्यं त्रिष्कालं भावितात्मनः ॥ ७
मनसा कर्म्मणा वाचा गुरुश्चैव स्वकं न तु ।
निवेदयेत् प्रयत्नेन भुक्तिमुक्तिजिगीषया ॥ ८ ॥
गुरुकौलागमे भक्ति अद्वैताचारभावितः ।
ईप्सितं तु व्रतं कुर्य्यादद्वैतेन समन्वितम् ॥ ९ ॥

---

Ms. 1. रोमञ्च ; 4. तृतयं ; स्वातन्त्र ; 5. सप्तं ज्ञाम ; नग्नं ; 6. या ।

देव्युवाच—

चर्य्याया लक्षणं देव प्रसादादवधारितम् ।
पुनः पृच्छामि देवेश पात्राणां लक्षणं शुभम् ॥ १० ॥

भैरव उवाच—

पात्राणां निर्णयं देवि शृणुष्वेकाग्रमानसः ।
मृन्मयं कूर्म्मजं देवि कांसजं ताम्रलोहजम् ॥ ११ ॥
हेमजं रौप्यजं वापि शुक्तिजं शङ्खजं प्रिये ।
कौलिकं तु वरारोहे तथान्यं काचसम्भवम् ॥ १२ ॥
शृङ्गोद्भवं सकाष्ठाद्यापाषाणसम्भवं प्रिये ।
विश्वामिलकपालञ्च सर्व्वपात्रोत्तमं प्रिये ॥ १३ ॥
तस्मिन् कृत्वा पिबेत् किञ्चिद्भक्ष्यञ्च भक्षयेद् यदि ।
पतिञ्च पतितञ्च तद्भवेच्चकोत्तमः [?] ॥ १४ ॥
ज्ञातव्यं पात्रमेतद्विशालं नारिकेलकम् ।
एततुपात्रमलाभेन अन्यपात्रे पिबेत् सुराम् ॥ १५ ॥
पात्राणां लक्षणं देवि चर्य्यायाश्चैव लक्षणम् ।
कथितं देवि सद्भावं किमन्यं पृच्छसेऽधुना ॥ १६ ॥

देव्युवाच—

अद्य मे सफलं जाता देवत्वं स्वरनायिक ।
ततुप्रसादेन देवेश ज्ञातव्यं ज्ञाननिर्णयम् ॥ १७ ॥

इति ज्ञाननिर्णये श्रीयोगिनीकौलम्महच्छ्रीमच्छ्रपादावतारिते चर्य्यापात्रलक्षणो द्वादशः पटलः ॥

---

Ms.—10. लक्षण ; 11. कांशजं ; 12, रोप्यज ; 14. भक्ष- ; 15. नालि- ; 16 चर्य्यायं ।

## त्रयोदशः पटलः ।

भैरव उवाच—

मोक्षप्रत्ययसंवित्ति शृणु त्वं वीरनायिके ।
अधोर्द्धश्च लभेज्जीवो ज्ञात्वा तं मुक्तिभोजनम् ॥ १ ॥
हंस हंस वदेन्नित्यं देहस्थावरजङ्गमे ।
श्रुत्वा तस्य पतिर्दिव्यं याति मोक्षवरं शुभम् ॥ २ ॥
येन व्याप्तं च त्रैलोक्यं जगद् यस्मिन् व्यवस्थितम् ।
तं ज्ञात्वा गूढसद्भावं सर्व्वज्ञत्वम्प्रजायते ॥ ३ ॥
न तेन विना मुच्यन्ते व्यवहारान्न हि तद्विना ।
शुभाशुभं च संभोक्तं न तेन रहितं क्वचित् ॥ ४ ॥
न मनश्चित्तमालब्धं न पेयं धारणं प्रिये ।
उन्मनन्तु मनो यस्य तस्य मोक्षो भवन्तीह ॥ ५ ॥
द्वादशान्ते यदा पश्येत् स्फूरन्तं मणिमालिका ।
तस्य मोक्षो भवेद्यस्तु पापपुण्यैर्न लिप्यते ॥ ६ ॥
देवयाने महायाने यस्य चित्तं सदा प्रिये ।
तस्य मोक्षो न सन्देहः पद्मपत्राम्बुबिन्दुवत् ॥ ७ ॥
इ गुदे इक्षु मेढ्रे इयौ नाभौ ॥ इमौ वक्त्रे ॥
इवौ दक्षिणनासा[यां]॥ इलौ वामपुटे॥इरौ दक्षिणतः ॥
इडो दक्षिणकर्णः ॥ इशौ वाम कर्णः ॥
इह्रौ भ्रूमध्ये ॥ सं तं ललाटे ॥ सं अं वामकर्णे ॥
सः यं दक्षिणकर्णः ॥ सः पं वामचक्षुः ॥
सः क्ष दक्षिणचक्षुः ॥

वः तं वामनासिका ॥ सः पुं दक्षिणनासिका ॥
सः रूं वक्त्रम् ॥ सः यं नाभि ॥ सः षुँ मेढ्रः ॥
सः लं गुदे ॥

इदं न्यासक्रमन्देवि यस्य देहे प्रवर्त्तते ।
तस्य मोक्षो न सन्देहः परं संवित्तिपूर्व्वकम् ॥
पिण्डपाते यदा देवि कपालम्भिद्यते तदा ॥ ८ ॥

इति ज्ञाननिर्णये योगिनीकौलमहच्छ्रीमच्छेन्द्रपादावतारिते चन्द्रद्वीप-
विनिर्गते न्यासः त्रयोदशः पटलः ॥

## चतुर्द्दशः पटलः ।

देव्युवाच—

मन्त्रजालविनिर्म्मुक्तम्प्राणायामविवर्ज्जितम् ।
चक्रध्यानविनिर्मुक्तं सद्यः सिद्धिकरं परम् ॥ १ ॥
निर्गमं देहमध्ये तु संशयच्छित्तिकारकम् ।
शृणु त्वमद्भुतं देवि महदाश्चर्य्यकारकम् ॥ २ ॥
ब्रह्मा विष्णुः सुराः सर्व्वे क्लिश्यन्ते मन्दबुद्धयः ।
गन्धर्वाः किन्नरा यक्षा असुराश्च तपोधनाः ॥ ३ ॥
न तेषां कथितं देवि इमं कौलं परं प्रिये ।
कुलभक्तिविहीने तु गुरुभक्तिविवर्ज्जिते ॥ ४ ॥
न देयं कौलिकं सारं शिष्यैर्मन्दपरीक्षिते ।
वञ्चका कृपणा मूढा हीनानि सत्यनिन्दिते ॥ ५ ॥
न दद्यादनुग्रहा यस्या देवाग्नियतिद्वेषकाः ।
ये दद्यास्तु इमे शिष्या देशिको सिद्धिर्हीयते ॥ ६ ॥
गुर्व्वाज्ञाकारिणो नित्यं युक्तायुक्तपरीक्षकः ।
धर्म्मे च रतये नित्यं क्रोधये शून्यवर्ज्जितः ॥ ७ ॥
निश्चितनिस्पृहे गुप्ते निस्संशैकान्तवासिने ।
देवाग्नियतियोगिन्या भक्त्या नित्यं प्रसन्नधीः ॥ ८ ॥
वरयेच्छिष्य कुर्व्वीत दृढभक्तिपरायणः ।
सुपरीक्ष्य सदा तस्य यो दद्याच्चिरजीवितम् ॥ ९ ॥
द्वौभावसुप्रपञ्चात्मा कपटव्रतधारिणः ।
योगिनीनां च विद्विष्टे गुर्व्वाज्ञालोपकारकः ॥ १० ॥

---

Ms.—2. संययो- ; 4. कोलं ; 8. भक्ता for भक्त्या ; 9. सुपरीष्व ।

न देयं कौलिकं ज्ञानं कामिने क्रोधिने तथा ।
न शिवदूषके देवि निन्दके कुलभैरवे ॥ ११ ॥
सागररत्नसंघाते अमूल्यं भुवि विक्रयः ।
सागरं रत्नसंपूर्णमक्रेतुं यस्य संचयः ॥ १२ ॥
न[द]द्यान्निन्दको देवि सप्ताहनि परेण हि ।
इमं कौलं महादेवि सर्व्वकालस्य निर्णयम् ॥ १३ ॥
यस्य कौलागमे स्पर्द्धा ना ज्ञातुमीदृशं प्रिये ।
सम्यग् ज्ञानवरं देवि सप्ता···न्नदापयेत् ॥ १४ ॥
यत् क्रमं पृच्छितं देवि तत् क्रमं श्रृणु भाविनि ।
प्रथमं मूलचक्रन्तु यदान्यभ्यसते प्रिये ॥ १५ ॥
तदा तु प्रत्ययं देवि महदाश्चर्य्यकारकः ।
प्रथमं कम्पमायाति धूननन्तु द्वितीयकम् ॥ १६ ॥
हस्तपादशिरःकम्पभाषाणि विविधानि च ।
मन्त्रमुद्रगणं सर्व्वं दुर्दुरप्लुत एव सः ॥ १७ ॥
भूमित्यागकवित्वञ्च अतीतानागतं तथा ।
कालस्य वञ्चनं देवि रूपस्य परिवर्त्तनम् ॥ १८ ॥
बलीपलितनाशञ्च खेचरत्वं हि सुन्दरि ।
अष्टौ च सिद्धिसंप्राप्तिर्मूलकौलं वरानने ॥ १९ ॥
श्रृणु त्वमद्भूतं देवि आधारस्यैव निर्णयम् ।
देव्याश्चक्रोर्द्ध्वं देवेशि आधारश्चतुरङ्गुलम् ॥ २० ॥
तस्मिंश्चैव मनः कृत्वा शुचि भूत्वा तु पार्व्वति ।
कम्पस्तोभस्तथा भाषा मुद्रासुतप्लवनन्तथा ॥ २१ ॥

---

Ms.—14 ज्ञातु ; 15 प्रथं for प्रथमं ; 19. नासञ्च ; 20. मङ्गतं ।

अश्रुतानि तु शास्त्राणि मन्त्रमुद्रागणं महत् ।
भून्मार्गं [?] खेचरत्वञ्च वश्यमाकर्षणन्तथा ॥ २२ ॥
जरापहरणं देवि मृत्युकालस्य वञ्चनम् ।
पातालं खेचरत्वञ्च अचिराद्भवति प्रिये ॥ २३ ॥
एतत्ते कथितं तुभ्यं आधारस्य [तु] लक्षणम् ।
अथान्यं [सं]प्रवक्ष्यामि ब्रह्मग्रन्थिविनिर्णयम् ॥ २४ ॥
तस्मिंस्थाने मनः कृत्वा प्रहरैकेण भाविनि ।
कम्पस्तोभादिकं भद्रे भाषा चैव त्वनेकधा ॥ २५ ॥
दूराश्रवणं पुरक्षोभम् अतीतानागतन्तथा ।
कालस्य वञ्चनं देवि अमरञ्च कवित्वता ॥ २६ ॥
अणिमादिगुणैश्वर्य्यं सिद्धिश्च मानसी भवेत् ।
एतत्ते कथितं देवि ब्रह्मग्रन्थिविनिर्णयम् ॥ २७ ॥
अतोर्द्ध्वं शृणु कल्याणि यथातथ्यं यशस्विनि ।
ऊर्द्ध्व रोमाः प्रवर्त्तन्ते यस्मिंस्थाने तु त्र्यम्बके ॥ २८ ॥
ज्वलज्ज्योतिस्समाकारा किञ्चिद्विद्युसमप्रभः ।
चिन्तयेत् सप्तरात्रन्तु प्रत्ययश्चोपजायते ॥ २९ ॥
कम्पस्तोभस्तथा भाषा मुद्रामुत्पतनन्तथा ।
पुरप्रवेशमावेशं वश्यमाकर्षणादिकम् ॥ ३० ॥
अतीतानागतश्चैव दूराच्च दर्शनं तथा ।
वलीपलितनाशश्च रूपस्य परिवर्त्तनम् ॥ ३१ ॥
खेचरीणां च सामान्यो भवेदभ्यासतो रतः ।
एतत्ते कथितं देवि रोमकूपादि कौलिकम् ॥ ३२ ॥

---

Ms.—28. अतोर्द्ध ; 29. रोम ; 30. मावेश ; 31. दूराच ; बलि ।

वृषणोत्थस्य कौलस्य कथितं तव सुव्रते ।
शृणु त्वं वरदे नित्यं वीराणां वीरमातरे ॥ ३३ ॥
वह्निकौलस्य योऽभ्यासं कथयामि च सांप्रतम् ।
तस्मिंश्चित्तं स्थिरं कृत्वा क्षणार्द्धं यावत्तिष्ठति ॥ ३४ ॥
स्तोभभाषादिमुद्राश्च भूमित्यागादिकारकम् ।
वश्यमाकर्षणं देवि जरामरणनाशनम् ॥ ३५ ॥
पुरप्रवेशमावेशं पुरक्षोभादिकारकम् ।
उत्तिष्ठ खड्गपातालं ध्रुवं सिध्यति कौलिके ॥ ३६ ॥
ईप्सितं कुरुते रूपं सतताभ्यासतत्परः ।
पुनरन्यं प्रवक्ष्यामि कौलसद्भावमुत्तमम् ॥ ३७ ॥
हृदिस्थन्तु मनः कृत्वा तन्निष्ठं यावत्तिष्ठति ।
तावत् समाधिमायाति स्तोभावेशादिलक्षणम् ॥ ३८ ॥
भ्रमते अङ्गमङ्गानि हस्तपादशिरादिकम् ।
वर्णना स्फोटना वापि पुरक्षोभं वरप्रदे ॥ ३९ ॥
गान्धर्व्वी किन्नरी वापि यक्षी पातालवासिनी ।
असुरी चैव देवेशि विद्याधरी सुलोचने ॥ ४० ॥
क्षुभ्यते च न संदेहो ह्यभ्यासात्तद्गतस्य तु ।
अतीतानागतञ्चैव दूराश्रवणमेव च ॥ ४१ ॥
पुरप्रवेशमावेशं मृत्युनाशं महातपे ।
योगिनीमेलकत्वञ्च अचिराद्भवति स्फुटम् ॥ ४२ ॥
एतत्ते कुलसद्भावं हृदिस्थं प्रकटीकृतम् ।
पुनराश्चर्य्यं वक्ष्यामि शृणु त्वं मकरध्वजे ॥ ४३ ॥

---

Ms.—34. तस्मिं । 43. पुनराश्चर्य्यं ।

चित्तं कृत्वा प्रयत्नेन कण्ठकूपोद्भवं प्रिये ।
वदने शास्त्रसद्भावं स्वशक्त्या चोदितं प्रिये ॥ ४४ ॥
अतीतानागतञ्चैव वर्त्तमानन्तथैव च ।
न मृत्युर्भवते तस्य अक्षयो ह्यमरच्युतिः ॥ ४५ ॥
जराव्याधिविनिर्म्मुक्तं बलीपलितवर्ज्जितम् ।
क्रुद्धन्तु चालयेद्देवि त्रैलोक्यसचराचरम् ॥ ४६ ॥
न ब्रह्मा न च वा विष्णुर्न रुद्रा रुद्र एव च ।
यादृशो भवते सिद्धिस्सतताभ्यास एव च ॥ ४७ ॥
पदोत्तिष्ठमिदं कौलं नात्मानं ज्ञाननिर्णयम् ।
एतज् ज्ञानं वरं ज्ञानं स्वातन्त्र्यसिद्धिमानसी ॥ ४८ ॥
कथितं ज्ञानसद्भावं सुगोप्यं कण्ठसंस्थितम् ।
गृहीतव्यं प्रयत्नेन कौलवे सिद्धिमिच्छता ॥ ४९ ॥
अत ऊर्द्ध्वेश्वरं गुह्यं सर्व्वव्याधिविमर्द्दकम् ।
रसना ऊर्द्ध्वकं कृत्वा मनस्तस्मिन्निवेशयेत् ॥ ५० ॥
सतताभ्यासयेत्तत्तु मुहूर्त्तं नाशयेत् प्रिये ।
क्षणेन मुच्यते रोगैर्व्याधिमृत्युजरादिभिः ॥ ५१ ॥
नश्यते व्याधिसंघातं सिंहस्यैव यथा मृगाः ।
क्षणेन नश्यते व्याधिः कटुके कुष्ठनाशनम् ॥ ५२ ॥
सुस्वादेन महादेवि बलीपलितनाशनम् ।
क्षीरस्वादेन मेधावि अमरो जायते नरः ॥ ५३ ॥
घृतस्वादोपमनं देवि स्वातन्त्रन्तु यथा भवेत् ।
चित्तं दद्यान्तु चक्रेण नासे दद्यात् विजृम्भिका ॥ ५४ ॥

Ms.—46. चालयद्देवि ; 48. स्वातन्त्रः ; 49. सुगोप्य ।

वाचा सिद्धिर्भवत्येव कामदेवोऽपरः प्रिये ।
देवकन्या सुराणाञ्च यक्षविद्याधरो भवेत् ॥ ५५ ॥
मृष्टादिखण्डखाद्याश्च लड्डुकशोकवर्त्तिका ।
दिव्यकन्या अनेकाश्च आकृष्य भुञ्जते प्रिये ॥ ५६ ॥
अणिमा लघिमा देवि ऊर्द्ध रेतःप्रवर्त्तनम् ।
ऊर्द्ध रेता भवेद् योगी न योगी करत [?] प्रिये ॥ ५७ ॥
निष्ठीवनं न कर्त्तव्यं प्रसादादपि भाषिणि ।
दुर्लभन्तु इमं चक्रं नास्ति योगं इमम्परम् ॥ ५८ ॥
अत ऊर्द्धम्परं गुह्यं योगिनीकौलमुत्तमम् ।
अभ्यासे तु पदाभ्यस्त महदाश्चर्य्यकारकम् ॥ ५९ ॥
अणिमादिगुणास्तस्मिन् दूरात् स दर्शनन्तथा ।
भवते नात्र संदेहः सतताभ्याससतत्परः ॥ ६० ॥
मृतकोत्थापनं देवि परदेहप्रवेशनम् ।
प्रतिमाजल्पनन्तस्मि[न्] घटपाषाणस्फोटनम् ॥ ६१ ॥
पशुग्रहणमावेशं रूपादिपरिवर्त्तनम् ।
ब्रह्मविष्णुयमेन्द्राश्च वरुणो वायुरेव च ॥ ६२ ॥
स्वर्गाद्यासोमराजानं देहमध्ये वरानने ।
गन्धर्व्वाः किन्नरा यक्षा नागा विद्याधराः प्रिये ॥ ६३ ॥
विमानकोटिसन्तानाः सर्व्वाभरणभूषिताः ।
नक्षत्रतारकोपेतं ब्रह्माण्डपरिघट्टितम् ॥ ३४ ॥
पश्यते देहमध्यस्थं त्रैलोक्यं सचराचरम् ।
दर्शयेत् स्वकपिण्डं सततध्यानादनेकधा ॥ ६५ ॥

---

Ms.—55. प्रियः ; 58. नास्ता योग ; 59. पदन्यस्त ; 65. त्रैलोक्य ।

सहस्रकोटिभिर्देवि कर्त्ता हर्त्ता स्वयं शिवः ।
अभ्यासाद् ददते सिद्धिरष्टधा शास्त्रचोदिता ॥ ६६ ॥
पूज्यते सर्व्वसिद्धैश्च मम तुल्यं वरानने ।
सतः कौलमिदं देयं न देयं यस्य कस्यचित् ॥ ६७ ॥
गुरुकौलागमे भक्त्या देव्याः पूजारतः सदा ।
एतदोद्धरणं गोप्यं नित्यन्तु कृतनिश्चयः ॥ ६८ ॥
अत ऊर्द्धं प्रवक्ष्यामि शृणु त्वं कुलभाविनि ।
ललाटवर्णराशिस्थं लक्षं कृत्य सुरार्च्चिते ॥ ६९ ॥
जल्पते बहुधा भाषा अङ्गस्य भ्रमणन्तथा ।
नादं प्रमुञ्चते देवि महावेगश्च जायते ॥ ७० ॥
ईप्सितं कुरुते रूपम् अभ्यासन्ततुपरं प्रिये ।
अत ऊर्द्धम्परं गुह्यं शृणु त्वञ्च परापरम् ॥ ७१ ॥
ललाटवर्णराशिस्थं ब्रह्मरन्ध्रस्य मध्यतः ।
अभ्यासात् सततं वीर ग्रामधर्म्मञ्च वर्ज्जयेत् ॥ ७२ ॥
सृष्टिसंहारकर्त्तारो भवत्येव न संशयः ।
जरा-मरणनिर्म्मुक्तो नित्यं वै योगिनीप्रिये ॥ ७३ ॥
ज्ञातमात्रेण [तु] देवि अभ्यासे मोक्षतां गतिः ।
अत ऊर्द्धं प्रवक्ष्यामि रन्ध्रकौशलस्य निर्णयम् ॥ ७४ ॥
सततमभ्यसेत् प्राज्ञो व्याधिमृत्युर्न विद्यते ।
मम तुल्यबलो भूत्वा संहारसृष्टिकारकम् ॥ ७५ ॥
स्वतन्त्रं क्रीडते भद्रे इच्छारूपी भवेद् यथा ।
विसर्ज्जः कौलिकं देवि तस्मिंश्चित्ते स्थिरं सदा ॥ ७६ ॥

Ms,—66. देवि ।

शृण्वन्ति दूरतो देवि मननश्चावलोकनम् ।
कपालघट्टिका देवि निगूढं स्थापितं प्रिये ॥ ७७ ॥
एतदभ्यसतो देवि निष्क्रमेद्बाह्यतः सदा ।
मक्षिकामंत्कुणो वापि व्याघ्रसिंहगजस्तथा ॥ ७८ ॥
एतत्तु धारयेद्रूपं मनसा चिन्तितं प्रिये ।
एतत्तु कुलविज्ञानं पारम्पर्य्यक्रमागतम् ॥ ७९ ॥
मोक्षदं सारमेवं [च] ज्ञातव्यं वरवर्णिनि ।
तस्मात् सर्व्वं प्रयत्नेन ज्ञातव्यं कुललक्षणम् ॥ ८० ॥
घटपूर्णमिव कुम्भं कुड्यस्तम्भा इवाचलः ।
व्यापयित्वा स्थितो देव तद्वद् योगीनसोपमः[?] ॥ ८१ ॥
अतोर्द्ध्वं संप्रवक्ष्यामि शृणु त्वं वीरवन्दिते ।
न जलं चिन्तयेद्देवि न वह्निवायुराकाशम् ॥ ८२ ॥
नाधस्तादूर्द्ध्वमध्यश्च काष्ठवल्लोष्ट्रवत् प्रिये ।
मनस्य उन्मनीभावो यदा भवति सुन्दरि ॥ ८३ ॥
शून्यशून्यमनः कृत्वा निश्चिन्तो निश्चलस्थितिः ।
घटपटस्थितस्तम्भा ग्रामकूपादिकं बुधः ॥ ८४ ॥
भेरिशङ्खमृदङ्गैश्च वीणावंशनिनादितैः ।
ताड्यमानन्नबोध्यते जीवस्तल्लयतां गतः ॥ ८५ ॥
भूतं भव्यं भविष्यञ्च अतीतानागतन्तथा ।
अक्षयो ह्यमरो भूत्वा कामदेवद्द्वितीयकः ॥ ८६ ॥
भेद्यमानो न जाये···खाद्यमानस्तु पन्नगैः ।
पुष्पवृष्टिपतन्तस्य पारिजातस्य सुन्दरि ॥ ८७ ॥

---

Ms.—80. सर्व्व ।

पूज्यते नागकन्याभिर्यथाहं हाटकेश्वरः ।
पञ्चश्रोतात्मकञ्चैव मोक्षार्थं चोदितो मया ॥ ८८ ॥
त्वद्भक्त्या निर्णयं देवि चोदितं कुलगोचरे ।
अतोर्द्धं कथ्यते देवि मुद्रानिर्णयलक्षणम् ॥ ८९ ॥
अनामा हृदये लग्ना मुद्रेयमीश्वरीप्रदा ।
द्वादशान्ते यदा पश्येत् स्फुरन्तम्मणिमालिका ॥ ९० ॥
अनामा नाम मुद्रेयं वपा [?] खेचरतां गतिम् ।
मुद्रितम्पञ्चमुद्राभिश्चैतन्यसहितं प्रिये ॥ ९१ ॥
भेदयेत्तत्कपाटञ्च अर्गलायासुसंश्रिता ।
पश्चाद्द्वादशान्तं यावच्च शक्त्याचारेण भेदयेत् ॥ ९२ ॥
देव्या भूत्वा च योगिन्या मातृचक्रावशानुगा ।
लीयन्ते खेचरीचक्रे क्षोभयेत् परमामृतम् ॥ ९३ ॥
अमृतेन विना देवि अमरत्वं कथं प्रिये ।
अमृतं कौलसद्भावं शृणु कामकलात्मकम् ॥ ९४ ॥
सहजान्तास्थितन्तत्त्वं स्फुरन्तं मणिनिर्म्मलम् ।
मुक्ताफलसमौपम्यं खद्योतसदृशं प्रिये ॥ ९५ ॥
तारकोल्लाससंकाशं प्रस्फुरन्तन्नभःस्थले ।
सित-रक्तञ्च कृष्णञ्च धूम्रपीतञ्च रूपकम् ॥ ९६ ॥
....................सृष्टिसंहारकारकम् ।
उत्पत्तिप्रलयञ्चैव अकुल-कुल-वर्ज्जितम् ॥ ९७ ॥
दिवायामभ्यसेद्देवि कृत्वादित्यन्तु दृष्टत [?] ।
स्वरूपं दृश्यते..............................॥ ९८ ॥

---

Ms.—90. मूद्रेय ; 95. मुक्तो ; 96. तारकोल्ल तु ।

···कुर्य्यात् प्रयत्नेन पररूपं न संशयः ।
क्षणेन कुरुते सृष्टिं संहारञ्च वरानने ॥ ९९ ॥
निशायामभ्यसेद्देवि उतुङ्गशतमीश्वरम् ।
कोदण्डद्वयमध्यस्त················ ॥ १०० ॥
एतन्ते परमं देवि येन सृष्टं चराचरः ।
अस्मिन्नेव लयं भद्रे समुद्रेण नदी यथा ॥ १०१ ॥
अनेन दृढमात्रेण पुण्यपापैर्न लिप्यते ।
पिण्डमष्टप्रकारेण अष्टधातुपदं प्रिये ॥ १०२ ॥
अष्टधा रूपविज्ञानं रूपातीतन्तु चाष्टधा ।
अष्टाष्टविधिना चक्रं ज्ञातव्यं सिद्धिकारणम् ॥ १०३ ॥
कुललक्षं कुलाधारं नलिकावज्रसम्भवा ।
क्षोभञ्च कुलयानञ्च परतत्त्वविदः प्रिये ॥ १०४ ॥
अनुज्ञा गुरुसिद्धानां देवतानाञ्च भासिनि ।
क्षीराम्भे फेनसदृशं शीतलं चन्द्रसन्निभम् ॥ १०५ ॥
निमेषार्द्धं क्षोभमायाति वेला इव महोदधेः ।
मुच्यते ज्वरकुष्ठाद्यैर्व्याधिसंघैर्महातपे ॥ १०६ ॥

इति ज्ञाननिर्णये श्रीयोगिनीकौलस्महच्छ्रीमच्छन्नपादावतारिते चन्द्रद्वीप-विनिर्गते ध्यानयोगमुद्रा चतुर्द्दशः पटलः ॥

---

Ms. 99. कुरुते ; 106. निमिशा ।

## पञ्चदशः पटलः ।



देव्युवाच—

अद्य मे सफलं जन्म सफलं च तपस्तथा ।
देवत्वमद्य सफलं त्वत्प्रसादेन भैरव ॥ १ ॥
तपश्च सफलं मेऽद्य अद्य नेत्रोपशोभितम् ।
अद्याहं कृतकल्याणि ज्ञानदृष्टिकृतक्षमा ॥ २ ॥
अद्य मे भूषितो कर्णौ महाकौलं श्रुतं मया ।
अद्य मे तेजपिण्डन्तु महाज्ञान हृदि स्थितम् ॥ ३ ॥
अद्य मे कुलशीलश्च अद्य मे रूपलक्षणम् ।
अद्य मे भ्रान्तिरुच्छिन्ना त्वत्प्रसादात् सुराधिप ॥ ४ ॥
विज्ञात्वा यन्मया पूर्व्वन्न पृच्छामि पदे पदे ।
यत् किञ्चित् दृढसद्भावं तत् सर्व्वं कथयस्व मे ॥ ५ ॥
अनधीतं मया पूर्व्वन्तुष्टस्त्वं मे पुनः पुनः ।
चारणाकोटयः सप्त तन्मध्ये पृच्छितं इमम् ॥ ६ ॥
पूर्व्वमेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
केनोपायेन वीरेश आत्मानं रक्षितं त्वया ।
तद्वस्तु कथ मे नाथ येनात्मरक्षितं त्वया ॥ ७ ॥

भैरव उवाच—

साधु साधु महाज्ञानि न पृष्टं केनचिदिमे ।
अत्यन्तगहनं देवि सुगोप्यं रक्षितं मया ॥ ८ ॥
मुण्डाधारैस्थित…नखाग्रे पश्य भैरवि ।
अस्थिचक्रस्य मध्यस्थं सर्व्वञ्चैव सुसंस्थितम् ॥ ९ ॥

---

Ms. 5. किञ्चिद् ; 9. यस्वद्भैरवि ।

सहजन्तु इ[मं] चक्रं वज्रनामातिकोद्भवम् ।
वज्रयोगप्रयोगेण वज्रवद्भवते नरः ॥ १० ॥
सप्तकोटिसहस्राणि पत्राणां केसरान्वितम् ।
अर्द्धकोटिगतं चक्रं सहस्रं कोटिजं शुभम् ॥ ११ ॥
त्रिगुणं वेष्टितं कृत्वा क्षीराधारे व्यवस्थित[ः] ।
क्षीराद्...विप्लकारैः पूरयेत्तत्तनुं सदा ॥ १२ ॥
कर्णिकायां परं तत्त्वं अतसीपुष्पसन्निभम् ।
पञ्चारमष्टपत्रञ्च षोडशारं सुशोभनम् ॥ १३ ॥
षोडशारं विलिख्यन्तु अन्तरालसमन्वितम् ।
अष्टारपद्मपत्रञ्च षोडशैकं वरानने ॥ १४ ॥
बिन्दुच्छिन्दश्च कर्त्तव्यं अन्तराल[म]पि सुव्रते ।
षोडशाक्षरभिन्नन्तु आत्मा वै प्राणसंयुतः ॥ १५ ॥
षोडशाक्षरभेदन्तु ऊर्द्ध्वं चक्रे व्यवस्थितम् ।
चतुष्कलं पुनर्देवि अन्यथा न कदाचन ॥ १६ ॥
आधारे च आत्मचक्रं...तदूर्द्धगम् ।
कर्णिकायात्मनः कृत्वा ऊर्द्धचक्रेण प्लावयेत् ॥ १७ ॥
गोक्षीरविप्लुतैर्देवि प्लाव्यमानं सविप्लषैः ।
द्विरष्टवर्षमात्मानं अधश्चक्रे व्यवस्थितम् ॥ १८ ॥
किञ्चिद्दर्शितवर्णाभं प्राणचक्रं सुलोचने ।
प्लावयेत् पूर्व्वचक्रेण पूर्णचन्द्रनिभं तनु ॥ १९ ॥
आनयेन्निश्चलीभूतम् अस्थिचक्रोद्भवेन तु ।
प्लावयित्वा जगत् सर्व्वं त्रयचक्रं समभ्यसेत् ॥ २० ॥

---

Ms.—12. पुरयन्तन्तनुं ; 16. पुनं ।

आरमूर्द्धिचक्रन्तु तदूर्द्धे चैव पार्व्वति ।
नलीकायां गर्भलीनं संहारन्तु कृतः प्रिये ॥ २१ ॥
बलीपलितनिर्म्मक्तो ज्वरव्याधिविवर्ज्जितः ।
अत्तयो ह्यमरो नित्यो यथार्हन्तिष्ट मानसः [?] ॥ २२ ॥
यदा भवति संहारस्तदा पश्येच्चराचरम् ।
तदाऽसौ तिष्ठते भद्रे मया सार्द्धं स्वरेश्वरि ॥ २३ ॥
यथा मह्यं प्रभुत्वञ्च त्रैलोक्यं सचराचरम् ।
तद्वत् स भवते देवि स्रष्टिसंहारकारकः ॥ २४ ॥
समचित्तं सदा लीनमस्थिचक्रं सुलोचने ।
वज्रवत्तिष्ठत देहं संहा[र]न्तु न हि प्रिये ॥ २५ ॥
मयाभ्यस्त[मि]दम्पूर्वन्तेनाहमक्षयं प्रिये ।
एतन्मया कथितं शास्त्रे अप्रमेयमनेकधा ॥ २६ ॥
इमन्तु गूढसद्भावं मम गुह्यं प्रगोपितम् ।
गोपनीयं प्रयत्नेन सतादूर्द्धन्न दापयेत् ।
एतत्ते कुलसद्भावम्मया तुभ्यम्प्रकाशितम् ॥ २७ ॥

इति ज्ञाननिर्णये योगिनीकौलम्महच्छ्रीमच्छेन्द्रपादावातारिते चन्द्रद्वीप-
विनिर्गते परमवज्रीकरणं नाम पञ्चदशः पटलः ॥

---

Ms.—22. वलि ; यथाहन्ति ; 27. गुह्य ।

# षोडशः पटलः ।



देव्युवाच—

योगिनीसिद्धसम्पन्नं दिव्यरूपेण भैरव ।
क्रीडते मातृमध्यस्थं स्वशक्तिं बलगर्व्वितम् ॥ १ ॥
दुर्व्विज्ञेयं सदा नाथ तुभ्यं चरितचेष्टितम् ।
न ज्ञातं सुरगान्धर्व्वैः किं पुनर्भुवि सम्भवैः ॥ २ ॥
त्रिष्कालं तिष्ठसे त्वले त्वलं वा पीठपर्व्वते ।
तन्ममाचक्ष्व देवेश भक्त्याणां दिव्यदर्शनम् ।
अतिध्यानविदं देव कथ्यतान्तु मम प्रभो ॥ ३ ॥

भैरव उवाच—

शोभनं पृच्छितं भद्रे अद्भुतसिद्धिगोचरे ।
कथ्यमानं विशालाक्षि किं भयं तेजभामिनि ॥ ४ ॥
श्रीशैलश्च महेन्द्रश्च पीठका[मा]ख्य विश्रुतम् ।
सन्निधानो ह्यहं भद्रे त्रिष्कालसिद्धिमेलकम् ॥ ५ ॥
प्रसन्ना ये नरा भद्रे व्योमध्यानैकचेतसः ।
दर्शनं च भवते तस्मिन् मया सार्द्धं कुलेश्वरि ॥ ६ ॥
श्रीशैले नाम संसिद्धिर्महेन्द्रे राजसं स्मृतम् ।
साध्विकं योगसंयुक्तो कामाख्यं पीठमास्मृतम् ॥ ७ ॥
तस्मिन् मेलापकं लब्ध्वा योगिनीसिद्धिः तत्समम् ।
मनसा चिन्तितं रूपं अणिमादिगुणाष्टकम् ॥ ८ ॥
किन्त्वया तेन विज्ञातं मह्यं चरितचेष्टितम् ।
कथितं मेलकं स्थानं श्रुतं ते चेष्टितं शुभम् ॥ ९ ॥

---

Ms—1. मध्येस्थं स्वक्ति ; 2. चेष्टित ; गान्धर्व्वै ; 4. त्येज ;

पञ्चस्रोतात्मकं चैव गोपितं सिद्धिगोचरम् ।
अभक्त्या चोद्यते नाथे अन्यथा न कदाचन ॥ १० ॥
अहन्तत् परमं तत्त्वं अहं स भैरवः प्रिये ।
अहं सदा शिव ईशः श्रीकण्ठो रुद्र एव च ॥ ११ ॥
अहं सो धीवरो देवी अहं वीरेश्वरः प्रिये ॥ १२ ॥
अनन्तोऽहम् महादेवि रुद्रोऽहं सुरसुन्दरि ।
संहरामि जगत् सर्व्वं संहारोऽहं कुलेश्वरि ॥ १३ ॥
चराचरः पुनः सृष्टिः स्रष्टारो धीरवन्दिते ।
विहितं त्रायते नित्यं विधाताऽहं कुलागमे ॥ १४ ॥
विश्वन्तु निश्रृतं येन विश्वपादेति गीयते ।
विचित्रचित्रतास्त्रष्टिर्विचित्रेति च विश्रुते ॥ १५ ॥
स्वेच्छया क्रीडितोऽहं च करोति विकरोति च ।
श्वेतपादस्त्वहं देवि श्वेतपादेति गीयते ॥ १६ ॥
चन्द्रकान्तसमं तेजं भृङ्गवर्णं सुनिर्म्मलम् ।
ते चाहं विश्रुते लोके भृङ्गपादा वरप्रदे ॥ १७ ॥
असुराणां सुराणां च अहं भट्टारकः प्रिये ।
भट्टपादेति विख्यातो नामेदं मम सुन्दरि ॥ १८ ॥
श्रियामुत्कण्ठिता ये तु श्रीकण्ठस्तेन उच्यते ।
रूरूपादं महादेवि रूद्रोऽहं द्रावणप्रिये ॥ १९ ॥
(रूरूपादं महादेवि महीद्रावणं प्रिये ।)
त्वउमातु महादेवि तुभ्यं पतिरहं प्रिये ॥ २० ॥
श्रियाया तु अहन्नाथ श्रीनाथ सिद्धगोचरे ।

---

Ms.—10. त्वभक्ष्या ; कडाकन ; 15. निश्रितं ।

यदावतारितं ज्ञानं कामरूपी त्वया मया ।
तदावतारितं तुभ्यं तत्त्वन्तु षण्मुखस्य च ॥ २१ ॥
तेन कौलागमे देवि विज्ञानं प्रणवप्रिये ।
अव्यक्तेन तु रूपेण चन्द्रद्वीपे अहं प्रिये ॥
अव्यक्तं गोचरं तेन कुलजातं मम प्रिये ॥ २२ ॥

श्रीदेव्युवाच—

किमर्थं चन्द्रद्वीपन्तु अहञ्चैव गतः प्रभो ।
किमर्थं ग्रसिता प्राज्ञा आदिषण्मुखस्य च ॥ २३ ॥
अन्योऽपि विस्मयो देवि कौलवे सिद्धिमिच्छता ।
सूचितं सूचनार्थाय वटुको नाम नामतः ॥
किं वर्णा ध्यानमात्रश्च श्रोतुमिच्छामि भैरव ॥ २४ ॥

भैरव उवाच—

आत्मानं बुध्यसे नाथ यद्यपि प्रियभाषिणि ।
इच्छा त्वं ज्ञानशक्तिश्च क्रियाख्या चैव भासिनि ॥२५॥
गौरी चैव महाकाली लक्ष्मी चैव श्रिया तया ।
अहं त्वं च विशालाक्षि सर्व्वशास्त्रावतारकः ॥ २६ ॥
अहं चैव त्वया सार्द्धं चन्द्रद्वीपं गतो यदा ।
तदा वटुकरूपेण कार्त्तिकेय [:] समागतः ॥ २७ ॥
अज्ञानभावमास्थाय तदा शास्त्रं हि मूषितम् ।
शासितोऽहं मया देवि षण्मुखा मूषकात्मकम् ॥ २८ ॥
गतोऽहं सागरं भद्रे ज्ञानदृष्ट्यावलोकनम् ।
मत्स्यमाकर्षयित्वा तु स्फोटितं चोदरं प्रिये ॥ २९ ॥

---

Ms.—21. कामरुपी ; 25. प्रियभासिनि ; 27. चन्द्रद्वीप ।

गृहीत्वा मत्स्योदरस्थन्तु आनीतन्तु गृही पुनः ।
स्थापयित्वा ज्ञानपट्टं मम गूढं तु रक्षितम् ॥ ३० ॥
पुनः क्रुद्धमनेनैव मूषकेण सुरेश्वरि ।
गार्त्तं कृत्वा सुरुङ्गाय पुनः क्षिप्तं हि सागरे ॥ ३१ ॥
दशकोटिप्रमाणेन महामांसेन भक्षितम् ।
मम क्रोध समुत्पन्नं शक्तिजालो मया कृतः ॥ ३२ ॥
आकर्षितो मत्स्यसत्वानां सागरह्लदात् ।
नागतोऽसौ महामत्स्या मम तुल्यबलः प्रिये ॥ ३३ ॥
ज्ञानतेजेन संभूतो दुर्ज्जयस्त्रिदशैरपि ।
ब्रह्मत्वं हि तदा त्यक्तं चित्तवी [?] धीवरात्मकम् ॥ ३४ ॥
अहं सो धीवरो देवि कैवर्त्तत्वं मया कृतः ।
आकृष्य तु तदा मत्स्यं शक्तिजालसमीकृतः ॥ ३५ ॥
मत्स्योदरन्तु तत्स्फोट्य गृहीतश्च कुलागमे ।
वदन्ति विदिता लोके पशवो ज्ञानवर्जिताः ॥ ३६ ॥

देव्युवाच—

ब्राह्मणोऽसि महापुण्ये कैवर्त्तत्वं मया कृतः ।
मत्स्याभिघातिनैर्विप्रा मत्स्यघ्नमेति विश्रुताः ।
कैवर्त्तत्वं कृतं यस्मात् कैवर्त्तो विप्रनायकः ॥ ३७ ॥

भैरव उवाच—

अव्यक्तेन महात्मान कृतं पूर्व्वन्तु सुन्दरि ।
अव्यक्तगोचरं तेन कुलैर्जातम्महाकृपे ॥ ३८ ॥

---

Ms —35. आकर्षस्तु तततामत्स्य ; 36 ज्ञानवर्त्तिता ; 38. जात ।

तुभ्यश्चैव महादेवि षट्मुखस्य च पार्व्वति ।
विघ्नेशो नन्दिनश्चैव महाकालस्य धीमते ॥ ३९ ॥
जया च विजयादीनां हरसिद्धिमहाबलाः ।
कालिका योगिनी ख्याता ऊर्द्धतो मत्समं प्रिये ॥ ४० ॥
अकुलं तु इमं भद्रे यत्राहं तिष्ठते तदा ।
कल्पान्ते च युगान्ते च मम देहे तु तिष्ठति ॥ ४१ ॥
जीवमध्ये यदा देवि पुष्पमूलफलान्विता ।
पत्रशाखासमायुक्तो वृक्षस्य चोद्भवं यथा ॥ ४२ ॥
तद्वदुत्पादितान्येऽपि मद्देहे कुलभामिनि ।
अज्ञानभाविता देवि पशुत्वं सुरनायिके ॥ ४३ ॥
गृहीत्वा तु पुनर्देवि महाज्ञानं प्रकीर्त्तितम् ।
कथितं तव कामेषि षट्मुखस्य गणस्य च ॥ ४४ ॥
नन्दी चैव महाकाले जया च विजयादिषु ।
भट्टाद्या द्रोणकादीनां तथा च हरसिद्धिका ॥ ४५ ॥
कथितं कालिका योगी सर्व्वकौलस्य निर्णयम् ।
भक्तियुक्ता समत्वेन सर्व्वे शृण्वन्तु कौलिकम् ॥ ४६ ॥
महाकौलात् सिद्धकौलं सिद्धकौलात् मसादरम् [?] ।
चतुर्युगविभागेन अवतारश्चोदितं मया ॥ ४७ ॥ ४७ ॥
ज्ञानादौ निर्णीतिः कौलं द्वितीये महत् संज्ञितम् ।
तृतीये सिद्धामृतन्नाम कलौ मत्स्योदरं प्रिये ॥ ४८ ॥
ये चास्मान्निर्गता देवि वर्णयिष्यामि तेऽखिलम् ।
एतस्माद् योगिनीकौलान्नाम्ना ज्ञानस्य निर्णीतौ ॥४९॥

क्षणेन योगिनी दृष्टा देव्या सह विनायकः ।
चत्वारः कुलसिद्धास्तु पृच्छमाना सुभाविता ॥ ५० ॥
रोमाञ्चकञ्चुका सर्व्वे पुष्पहस्तास्तु बोधिता ।
दण्डवत् पतिताः सर्व्वे आत्मवादं वद प्रभो ॥
योगाभ्यासरतानान्तु रक्तपालस्य निर्णयम् ॥ ५१ ॥

भैरव उवा[च]—

अहं त्वं च विशालाद्रि चन्द्रद्वीपसमागतौ ।
षट्मुखो वटुको जातः क्षत्रपालकुलागमे ॥ ५२ ॥
सिध्यन्ते कोटयः सप्त तावत्त्वं क्षत्रपालकः ।
वटुकौ किं न विज्ञातौ सुतौ तुल्यं वरानने ॥ ५३ ॥
सिद्धामृते तु यत् प्रोक्तं गुरोर्निन्दा विगर्हिता ।
रथ्याच्यवनसंजातं पतितं च महोदधौ ॥ ५४ ॥
कलौ युगे महाघोरे दिव्यैः संसाधितोऽपि सः ।
तन्त्रे तन्त्रे समाख्यातं यथाशापन्तु प्राप्तवान् ॥ ५५ ॥
तस्य पूजाबलिः पिण्ड आसनं जाप्यमेव च ।
कथयामि समासेन यथा सिध्यति साधके ॥ ५६ ॥

ह्रीं वटुकाय कपिलजटाय पिङ्गलनेत्राय देवीपुत्राय मातृपुत्राय इमां बलिं ममोपनीतां गृह्ण गृह्ण चुरु मुरु ह्रीं बलिमन्त्र चाल चाल भक्ष २०० पिण्डमन्त्रः यत्किञ्चित् भक्षयेत् प्राज्ञः अग्रपिण्डन्तु दापयेत् । ह्रीं वटुकाय आसनमन्त्रः ह्यौं ह्यौह्यं महाभैरव पूजनमन्त्रः । ह्रीं ह्रां जाप्य—

---

Ms.—48. कलो for कलौ ; 50 पतेने ; 52 . चं ; 53. किन्न ।

यः सदा जाप्यमिदं कुर्य्यान्निर्विघ्नं सिद्धिभाजनः ।
गृह्ण गृह्णेति वक्तव्यं गृह्णाति वटुकस्तथा ॥ ५७ ॥
दण्डहस्तं सदाध्यायेज्जटिलं ब्रह्मतेजसम् ।
रक्ताम्बरपरीधानं वटुकं विघ्नमर्द्दकम् ॥ ५८ ॥
पूज्यमानं सदाकालं अग्रतो दण्डपाणिनम् ।
चतुरङ्गबलं जित्वा उष्टानां [?] स्तम्भकारकम् ॥ ५९ ॥
चौरराजकुलादीनां सर्पव्याघ्रगजादिषु ।
ह्लीं च वटुक ह्लीं
इमां विद्यां जाप्यं कुर्य्याद्भयोर्द्धिता ॥ ६० ॥
नाशयेत् सर्व्वदुष्टानां सिंहस्यैव यथा गजाः ।
यत्र तत्र क्षुद्रसिद्धिर्बहुधा शास्त्रचोदिता ॥ ६१ ॥
ह्लीं वटुक उक्तमन्त्रेण करोति सुरसुन्दरि ।
ह्लीं काराङ्कुरराद्यैवं वटुकं सिद्धिपूजितम् ।
पूजयेत्तत् प्र[य]त्नेन कौलवे सिद्धिमिच्छता ॥ ६२ ॥

इति ज्ञाननिर्णये महायोगिनीकौले मत्स्येन्द्रपादावतारे चन्द्रद्वीपविनिर्गते षोडशः पटलः ॥

---

Ms.—58. धरीधान ; 61. नाशयेन् ; यधागजाः ।

## सप्तदशः पटलः

देव्युवाच—

यन्मया पृच्छितं देव आत्मवादस्य निर्णयम् ।
साम्प्रतं श्रोतुमिच्छामि निःसन्दिग्धं वद प्रभो ॥ १ ॥

भैरव उवाच—

साधु देवि महायोगे योगिनीसिद्धनायिके ।
गूढं गुह्यं सनाभिश्च हृदि पद्ममधोमुखम् ॥ २ ॥
समीरस्तोभकं चक्रं घण्टिकाग्रन्थिशीतलम् ।
नासाग्रं द्वादशान्तं च भ्रुवोर्मध्ये व्यवस्थितम् ॥ ३ ॥
ललाटं ब्रह्मरन्ध्रं च शिखरस्थं सुतेजसम् ।
एकादशविधं प्रोक्तं विज्ञानं देहमध्यतः ॥ ४ ॥
क्लिश्यन्ति मनुजात्यन्तमज्ञात्वा तु कुलागमम् ।
हृदिस्थसहजो देव स्मरणार्हः स उच्यते ॥ ५ ॥
हकारो निष्कलो नित्यः संकारं सकलं तथा ।
सृकारं तु सदा सृष्टि हीत्येवं संहरेज्जगत् ॥ ६ ॥
सकारं शुक्लपक्षन्तु हकारं कृष्णपक्षकम् ।
हकारमोक्षमित्याहुर्महार्थञ्च गतं परम् ॥ ७ ॥
न शिवेन विना शक्तिर्न शक्तिरहितः शिवः ।
अन्योऽन्यञ्च प्रवर्त्तन्ते अग्निधूमौ यथा प्रिये ॥ ८ ॥
न वृक्षरहिता च्छाया न छायारहितो द्रुमः ।
शक्त्याभ्यासरतो योगी कुले सामान्यतां व्रजेत् ॥ ९ ॥
स्थूलं सूक्ष्मं परो हंसौ ज्ञात्वा सर्व्वात्मकं प्रिये ।
पारम्पर्य्यान् मतं कौलं कर्णात् कर्णगतं परम् ॥ १० ॥

---

Ms.—3. समीरस्तोभकम् ।

अपरीक्ष्ये न दातव्यं दातव्यं सुपरीक्षिते ।
कृत्वा कुलाभिषेकन्तु प्रकाश्यं त्वात्मनिर्णयम् ॥ ११ ॥
पञ्चरत्नादि देवेशि ज्ञातव्या तु कुलागमे ।
प्रथमं पलितस्तम्भं द्वितीयम् ईप्सितं भवेत् ॥ १२ ॥
तृतीयं कामरूपत्वं चतुर्थमक्षयांशकम् ।
पञ्चमन्तु महारत्नं जरामरणनाशनम् ॥ १३ ॥
कृत्वा प्रेतासनं दिव्यं द्वादशान्तमनास्मृतम् ।
भूगृहे निर्ज्जने देशे गन्धधूपसुधूपिते ॥ १४ ॥
शुक्लाम्बरधरो भूत्वा श्रीखण्डेन विलेखयेत् ।
पर्य्यङ्कं विन्यसेत्तत्र सुसहायसमन्वितम् ॥ १५ ॥
महाव्याप्तिमहानिद्रां न शृणोति न पश्यति ।
सुगन्धं पूतिगन्धं वा कर्पूरञ्चन्दनादिषु ॥ १६ ॥
न गन्धं वेत्ति तत्त्वज्ञो महाव्याप्तिरियं प्रिये ।
अतीतानागतञ्चैव तस्मिन् कालस्य वञ्चनम् ॥ १७ ॥
कर्त्ता हर्त्ता भवेद्देवि यदुक्तो वीरमातरे ।
अधोर्द्ध्वं रमते हंसो द्वादशान्ते लयं पुनः ॥ १८ ॥
हृदिस्थं निश्चलीभूतं कुम्भमध्ये जलं यथा ।
मृणालतन्तुसदृशं भावाभावविवर्ज्जितम् ॥ १९ ॥
धारणाधेयरहितं सर्व्वज्ञं सर्व्वतोदितम् ।
स्वयं च चलते चोर्द्ध्वम् अधश्चैव स्वयम्पुनः ॥ २० ॥
रमते सहजं तत्त्वं यथात्मनि तथापरे ।
ज्ञात्वा तत्त्वमिदन्देवि भवबन्धात्मकैः प्रिये ॥ २१ ॥

कर्णञ्च हृदये कृत्वा ज्ञातव्यं हंसलक्षणम् ।
कण्ठस्थाने ध्वनिर्दिव्या सकला तु परापरा ॥ २२ ॥
आपादतलमूर्द्धान्ता वामाख्यं कुण्डलाकृतिम् ।
गुदस्थमुदयन्तस्या द्वादशान्ते लयं पुनः ॥ २३ ॥
एवं तु चरते हंसो देहमध्ये शुभाशुभे ।
निर्लेपं निष्कलं चोर्द्धं शुद्धमत्यन्तनिर्म्मलम् ॥ २४ ॥
निगर्भं गर्भरूपेण नित्यानन्दैकलक्षणम् ।
ज्ञातव्यं गहनं नाथ महाज्ञानगतं परम् ॥ २५ ॥
अप्रमेयमचिन्त्यं च निराभ्यासपदं स्मृतम् ।
निश्वासोच्छ्वाससंयुक्तं भावाभावसमन्वितम् ॥ २६ ॥
स सञ्चरति भूतेषु भूतग्रामे चतुर्व्विधे ।
स आत्मा स स्वयं कर्त्ता पिण्डं चैव तु संहरेत् ॥ २७ ॥
पिण्डस्यैवम्भवेद्दुःखं बन्धस्यैव सुखं परम् ।
विषादं हरिषञ्चैव जरामरणमेव च ॥ २८ ॥
क्षुधा तृषा च मोहश्च भयाद्या लोभमेव च ।
दारिद्रम्बन्धनादीनि पिण्डस्यैव सुलोचने ॥ २९ ॥
न चासौ छिद्यते शस्त्रैर्ण चक्रेण बलीयसा ।
भिद्यन्ति नैव वज्रेण न च वह्नौ दहत्यसौ ॥ ३० ॥
न जलेन भवेन्मृत्युर्न जले जीवितं भवेत् ।
न मोहं न च वा रागं न मदं मत्सरं सदा ॥ ३१ ॥
न लोभं न च वा कोपं न चिन्ता बाध्यते ते [?] सः ।
इन्द्रियाणामिदं सर्व्वं भूतानां च वरप्रदे ॥ ३२ ॥

जीवेन च जगत् सृष्टं स जीवस्तत्त्वनायकः ।
स जीवः पुद्गलो हंसः स शिवो व्यापकः परः ॥ ३३ ॥
स मनस्तूच्यते भद्रे व्यापकः स चराचरे ।
आत्मानमात्मना ज्ञात्वा भुक्तिमुक्तिप्रदायका ॥ ३४ ॥
प्रथमा तु गुरुर्ह्यात्मा आत्मानं बन्धयेत् पुनः ।
बन्धस्तु मोचयेद् ह्यात्मा आत्मानमात्मनः प्रभुः ॥ ३५ ॥
आत्मानमात्मना ज्ञात्वा आत्मा वै कायरूपिणः ।
आत्मनश्चापरो देवि येन ज्ञातं स योगिराट् ॥ ३६ ॥
स शिवः प्रोच्यते साक्षात् स मुक्तो मोचयेत् परः ।
सुविशुद्धः सदा देवि पङ्कस्थमिव पङ्कजम् ॥ ३७ ॥
मानुष्यं पिण्डमास्थाय स शिवः क्रीडते भुवि ।
इत्थम्भूतं परात्मानं येन ज्ञातं सुभामिनि ॥ ७८ ॥
तस्यैव स्पर्शमात्रेण भवेन्मुक्तिर्न संशयः ।
तस्योच्छिष्टश्च संप्राप्य भवेन्मुक्तिः परा प्रिये ॥ ३९ ॥
तेनैव स्नापिते देवि अभ्यङ्गोद्वर्त्तनेन तु ।
तेन पादेन संस्पृष्टे सोऽपि मोक्षस्य भाजनः ॥ ४० ॥
एकेन तेन भुक्तेन भुक्तं चैव चराचरम् ।
सर्व्वतीर्थेषु यत् पुण्यं स्नात्वा लभति मानवः ।
तं ज्ञेयन्तु मनः कृत्वा अधिकं तु फलं लभेत् ॥ ४१ ॥
योगिनीसिद्धसद्भावं वीरमातृगणादिषु ।
अस्योर्द्ध्वं तु निगद्यतु भुक्तिमुक्तिप्रदं शुभम् ॥ ४२ ॥

इति ज्ञाननिर्णये महायोगिनीकौलेश्रीमच्छेन्द्रपादावतारिते चन्द्रद्वीपविनिर्गते सप्तदशः पटलः ॥

---

[illegible] 40. तेनैव ।

## अष्टादशः पटलः

देव्युवाच—

सिद्धानां पूजनन्देव देहस्थप्रत्ययात्मकम् ।
कुलद्वीपविधानं च संक्षेपात् कथ्यतां प्रभो ॥
कौलवं सिद्धिकामस्य अभिषेकं कीदृग् भवेत् ॥ १ ॥

भैरव उवाच—

साधूक्तं कथयिष्यामि कुलं द्वीपस्य यो विधिः ।
यवाद्याशालिचूर्णन्तु पिष्टं वा गोधूमोद्भवम् ॥ २ ॥
येन केनचित् पिष्टेन अनेन सुरसुन्दरि ।
ह्रींकारमन्त्रितं कृत्वा वर्त्तिद्वादशभूषितम् ॥ ३ ॥
क्षीरखण्डादिमृष्टन्तु घृतपूर्णसुशोभनम् ।
पार्श्वे तु पूजयेत् सिद्धां योगिनीं गुरुमेव च ॥ ४ ॥
एककालं द्विकालं वा त्रिष्कालं पूजयेत् क्रमम् ।
अग्रतः पूजयेन्नित्यं भुञ्जमानाग्रनायिके ॥ ५ ॥
जपेद्बीजपरं श्रेष्ठं ह्रींकारं योगिनीप्रियम् ।
योगिनीमेलकं ह्यस्मिन् भुक्तिमुक्तिप्रदः सदा ॥ ६ ॥
अथान्यं सम्प्रवक्ष्यामि अभिषेके कुलगोचरे ।
रक्तेन पूरयेद् रक्तं शुक्रस्यैव समं प्रिये ॥ ७ ॥
कुण्डगोलोद्भवेनैव मधुं च घृतसंयुतम् ।
रक्तं वामामृतं शुक्रं सुरया ब्रह्ममिश्रितम् ॥ ८ ॥
वुकपुष्पसमायुक्तकृष्णासवसमायुतम् ।
मदिरानन्दचैतन्यं भक्तियुक्तो महात्मनः ॥ ९ ॥

उद्धरेद्रुममन्त्वन्तु गुरुसिद्धाश्च देवताम् ।
ह्लीं क्लीं म्हौ जुं सः—
शङ्खस्थं कलशस्थं वा पूजयित्वा यथाक्रमम् ॥ १० ॥
दृढभक्तस्य देवेशे आचार्य्यो दृढलक्ष्मवित् ।
जयाद्याश्चौषधीः [?] सर्व्वा मोहनाद्या कृताञ्जली ॥११॥
पञ्चरत्नसमोपेतां रक्तयुक्तेन वेष्टितम् ।
क्षारक्षीरदधिसर्पि मद्योदे इक्षुमेव च ॥ १२ ॥
स्वादुदश्चैव गर्भादं क्रमेण परिजल्पयेत् ।
वक्त्रे कैकशो [?] मध्ये च अष्टौ तां कुलपर्व्वताम् ॥१३॥
वेश्याकुमारिकाभिर्वा आचार्य्यः स्वकरैस्तथा ।
उद्धृत्य शिरसि दद्यात् ततो योगी भविष्यति ॥ १४ ॥
पुनस्तु यजनं वक्ष्ये यथावत्तन्निबोध मे ।
रक्तं युक्तं समादाय अथवा चिलजं शुभम् ॥ १५ ॥
ततस्तुष्टजयेद्देवि क्रमश्चैव समाहित ।
अक्षतैः शालिजैर्दिव्यैरन्यैर्वापि सुशोभनैः ॥ १६ ॥
चतुःषष्टिक्रमयुतैः पूजयेत् तत्क्रमं शुभम् ।
दिव्यसुगन्धपुष्पैस्तु विचित्राभरणभूषितः ॥ १७ ॥
आचार्य्यः सुमनो भूत्वा सर्व्वसंभारसंभृतः ।
योगिनी सिद्धवीराणां भवते मातृवल्लभः ॥ १८ ॥
मद्यमांससमायुक्तं मत्स्यभोज्ययुतं प्रिये ।
घृतखण्डसमायुक्तं शर्करायान्तु पूरयेत् ॥ १९ ॥

---

Ms.—11 श्चौषधी ।

कुम्भादि च वरं दद्यात् सहस्रं  वा शतैरपि ।
चतुःषष्टिश्च सौदर्य्यं अष्टौ च गुणापि वा ॥ २० ॥
निवेद्य गुरवे मानं गुरुपूजा विशेषतः ।
वीरपूजां ततः कृत्वा येन तुष्येत् पुनः पुनः ॥ २१ ॥
चरुकं भक्षयेत् प्राज्ञः समयहीने न दापयेत् ।
वक्त्राद्वक्त्रं विशेषेण सिद्धिभाग्यः समान्यथा ॥ २२ ॥
सामान्ये कथितं कुम्भे शङ्खाद्वक्त्रं विशेषतः ।
शास्त्रोक्तं तु क्रमं पूज्य सर्व्वसंभारसम्भृतः ।
अनेनारब्धमालेण सिद्धियोग्यो भवेत्ततः ॥ २३ ॥

इति ज्ञाननिर्णये महाकौले चन्द्रद्वीपविनिर्गते अष्टादशः पटलः ॥

---

## ऊनविंशतितमः पटलः

देव्युवाच—

देहस्थं पङ्कजं देव सिद्धानां साम्प्रतं वद ।

भैरव उवाच—

देव्याश्चक्रङ्गताः सर्व्वे दिव्यरूपसुतेजसः ॥ १ ॥
षोडशाकृतयः सर्व्वे तन्मध्ये आत्मनम्प्रिये ।
मोक्षकामी सदा ध्यायेच्छुक्लाम्बरधरां शुभाम् ॥ २ ॥
सदा यौवनकामिन्यः कृष्णवर्णन्तु चिन्तयेत् ।
रक्ताम्बरधरा ध्यायेद्रक्तगन्धानुलेपनः ॥ ३ ॥
रक्ताभी रक्तमालाभिर्भूषिता सिद्धयोगिनी ।
तन्मध्ये चात्म[ना] देवि तद्रूपं परिभावयेत् ॥ ४ ॥
श्रीनाथं योगिनीसार्द्धं वृन्दरूपञ्च भासिनि ।
शङ्खहस्ता सदा ध्यायेन्मनसा चिन्तितं लभेत् ॥ ५ ॥

इति ज्ञाननिर्णये महायोगिनीकौले श्रीमीनपादावतारिते
एकोनविंशतितमः पटलः ॥

## विंशतितमः पटलः

भैरव उवाच—

शृणु त्वमद्भुतन्देवि लोकेऽस्मिन् मोक्षप्रत्ययम् ।
गूदोर्द्ध्वम्पीडयेन्नाथ हृदि कण्ठादिकं प्रिये ॥ १ ॥
उत्पातं निक्षिपेदूर्द्ध्वं प्राणायामेन सुन्दरि ।
कपालं भेदमयाति यान्ति जीवो निरञ्जनम् ॥ २ ॥
स शिवो व्यापको भूत्वा कर्त्ता हर्त्ता वरानने ।
आत्मानं च परं वेत्ति वेत्तीत्येवं चराचरम् ॥ ३ ॥
दुःखन्तस्य न विद्येत सुखन्तस्य निरन्तरम् ।
अथान्यं साम्प्रतं देवि प्रत्यक्षमभ्यसेत् सदा ॥ ४ ॥
शक्त्याचाररतो नित्यं जिताहारैकमैथुनः ।
अनामापीडयेदूर्द्ध्वं नाभिश्च हृदयन्तथा ॥ ५ ॥
श्यामसूत्रगतं लक्षं शक्त्याग्रसंस्थितं मनः ।
आत्मप्राणसमं कृत्वा शक्त्याचाराग्रसंस्थितम् ॥ ६ ॥
पुष्पे वा प्रतिमाद्येषु अभ्यासाच्चलते प्रिये ।
षट्मासादभ्यसेद्देवि निश्वासोच्चपराङ्मुखाः ॥ ७ ॥
अब्दमनेकं देवेशे देशदेशान्तरं व्रजेत् ।
परदेहप्रवेशं स्यादभ्यासं वर्णितं तव ॥ ८ ॥
अथान्यं साम्प्रतं भद्रे शृणु त्वं वीरनायिके ।
कुलाशक्तेस्तु वीरस्य तथान्यं शक्तिलक्षणम् ॥ ९ ॥
अनादिनिधना शक्तिरिच्छा नाम शिवोद्भवा ।

---

Ms.—1. लोकस्मिं ; 2. अप्याति ; 4. अथास्य ; 6.—प्राणस्याम ; 6. अथान्य ; वीरनायके ; 10.—निधनाशक्ति ।

व्योममालिनी सा भद्रे खेचरीति निगद्यते ॥ १० ॥
वामाख्या कुण्डलीनाम ज्येष्ठा चैव मनोन्मनी ।
रुद्रशक्तिस्तु विख्याता कामाख्या तु गीयते ॥ ११ ॥
अग्रणी चैव सर्व्वेषां लिख्यते न च पठ्यते ।
मातृका शब्दरा[शिश्च] सर्व्वग्रन्थेषु कीर्त्त्यते ॥ १२ ॥

देव्युवाच—

ज्ञानशक्तिर्मया ज्ञाता क्रियाशक्तीर्वद प्रभो ।

भैरव उवाच—

कथयामि समासेन वीरस्य शक्तिलक्षणम् ॥ १३ ॥
उत्तमा धवलाक्षी तु कुटिलाग्राग्रकेशिनी ।
दशनैश्च ज्योत्स्नाकारैः सुरूपा चारुभाषिणी ॥ १४ ॥
कुले भक्तिसमायुक्ता गुरुदेव्या प्रपूजका ।
सुरूपा सुखभावा च सुभ्रुवा सुललाटका ॥ १५ ॥
कुलागमेन भक्ति……भयवर्जिता ।
सुशीला सुभगा देवि जनानन्दकरा शुभा ॥ १६ ॥
दुर्लभा लोकमध्ये तु ज्ञानवर्त्तस्य रक्ष्यते ।
इत्थंभूता यदा शक्तिर्वीरस्य लक्षणं शृणु ॥ १७ ॥
सुरूपः सुस्वभावश्च सत्यवादी च निश्चयी ।
गुरुकौलागमे भक्तः सुसन्धः क्रोधवर्जितः ॥ १८ ॥
सुशूरः सुभगो नित्यं स्वदेहप्रत्ययान्वितः ।
ईदृशी भवते वीरा रुद्रशक्त्या ह्यधिष्ठिता ॥ १९ ॥

---

Ms.—11. मनोन्ननीम् ; 12. कीत्यते ; 14. उत्तमो ; 19 - प्रत्ययान्वितम् ; ह्यधिष्ठितः ।

यत्तेजः स महालिङ्गमुत्पत्तिस्थितिकारकः ।
बिन्दुरूपं तु तं ज्ञात्वा स्फुरज्ज्वालावलीपरः ॥ २० ॥
अक्षोभ्यः सर्व्वशक्तीनां आत्मशक्त्यान्तरञ्जितः ।
सुज्ञात्वा देहजं शक्तिं तदा शक्तिपरिग्रहे ॥ २१ ॥
ज्ञानविज्ञानसम्पन्नः अद्वैताचारभावितः ।
कुलकौलागमे भक्ति ईदृशं वीरलक्षणम् ॥ २२ ॥

इति ज्ञाननिर्णये योगिनीकौले श्रीमीनपादावतारिते चन्द्रद्वीपाविनिर्गते विंशतितमः पटलः ।

---

## एकविंशतितमः पटलः

देव्युवाच—

संग्रहं वद मे नाथ वर्त्तनं कुलगोचरे।

भैरव उवाच—

कथयामि न सन्देहो संग्रहाचारलक्षणम् ॥ १ ॥
पञ्चपञ्चाशिको देवि मतं वै योगलक्षणम्।
तस्य भेदोपभेदेन कौलशास्त्रे विनिर्णयम् ॥ २ ॥
कुलपञ्चाशिकामूलं तथा च कुलसागरम्।
कुलोघो हृदयश्चैव भैरवोद्यानकं तथा ॥ ३ ॥
चन्द्रकौलश्च वेष्टिश्च[?] तथा वै ज्ञाननिर्णयम्।
अस्य मध्ये विनिष्क्रान्तं सम्बरनाम विश्रुतम् ॥ ४ ॥
सृष्टिकौलं महाकौलं तिमिरं च तथापरम्।
सिद्धामृतं तु कौलं मातकौलं तथापरम् ॥ ५ ॥
शक्तिभेदं तथा कौलं ऊर्म्मिकौलमनुत्तमम्।
चतुर्युगेषु देवेशि ज्ञानकौलस्य संगतिः ॥ ६ ॥
सिद्धेश्वरं तथा चान्यं कौलं वै वज्रसम्भवम्।
मेघजाश्च दूरतं तस्मिन् कौले विनिर्गतम् ॥ ७ ॥
अङ्गस्पर्शनिश्चरं देवि वज्रदाद्यामृतं तथा।
पूर्णिमायां अमावस्यां अष्टमी च चतुर्द्दशी ॥ ८ ॥

सजीवं मत्स्यमद्यञ्च मांसञ्चैव बलिं द[देत्] ।
व्याख्या चैव तु कर्त्तव्या आचार्य्यैः शङ्कवर्ज्जितः ॥६॥
न तिथिर्न च नक्षत्रं नोपवासं विधीयते ।
यत्र तत्र स्थितो योगी ज्ञानमेवं समाश्रयेत् ।
कथितं कौलसद्भावं नाम्ना ज्ञानस्य निर्णये ॥ १० ॥

इति ज्ञाननिर्णये महायोगिनीकौले श्रीमीनपादावतारिते चन्द्रद्वीपविनिर्गते
एकविंशतितमः पटलः ।

---

## द्वाविंशतितमः पटलः ।



देव्युवाच—

प्रणम्य प्राञ्जलि···व अद्याहं तव वल्लभ ।
अद्याहङ्कृतकृत्या तु हर सिद्धिविनायकः ॥ १ ॥
षड्मुखश्च महाकाल[ः] कालिका योगिनी तथा ।
नन्दीशो भट्टका चैव द्रोणका च तथा···॥ २ ॥
विजया तु महाभागा षड्योगिन्यस्तु मातराः ।
कौलामृते न संतृप्तो अहं सर्व्वेऽपि भैरव ॥ ३ ॥

भैरव उवाच—

यत् पुरा गोपितं भद्रे तत् सर्व्वं प्रकटीकृतः ।
भूलोके देवतानाञ्च कथितव्यं कुलागमे ॥ ४ ॥
सिद्धानाञ्च विशेषेण ख्यापनीयं कुलान्व[यम्] ।
समयाचारसमोपेतं विज्ञानं द्वैतवासिनाम् ॥ ५ ॥
गुप्तलिङ्गी सदा कालं गुरुपूजनतत्परः ।
वत्सलः सर्व्वलोकानां सर्व्वजीवदयान्वितः ॥ ६ ॥
भैरववचनं श्रुत्वा सर्व्वरोमाञ्चकञ्चुकाः ।
सन्तुष्टमनसः सर्व्वे दण्डवत् पति[ताः] भुवि ॥
कुलभावपराः सर्व्वे कृतकृत्या सुराधिपाः ॥ ७ ॥
अद्य मे गहनं नष्टं अज्ञानपटलाहतम् ।
संसारतरुविस्तीर्णमद्य छिन्नं त्वया प्रभो ॥ ८ ॥

---

Ms. 6. वत्सल ; 7. रोमञ्च ; 8. छिन्न ।

पाशजालतमोघश्च छिन्नाद्य दुःखसंशयः ।
दशकोटिस्तथा चार्द्धं नाम्ना ज्ञानस्य निर्णयः ॥ ९ ॥
तस्य मध्ये इमं नाथ सारभूतं समुद्धृतम् ।
कामरूपे इमं शास्त्रं योगिनीनां गृहे गृहे ॥ १० ॥
निग्रहानुग्रहश्चैव सिद्धिमेलापकं तथा ।
कुर्व्वन्ति सततं देवि अस्य ज्ञानप्रसादतः ॥ ११ ॥
चन्द्रद्वीपं महाशास्त्रं अवतीर्णं सुलोचने ।
कामाख्ये गीयते नाथे महामत्स्योदरस्थितिः ॥ १२ ॥

इति ज्ञाननिर्णये महायोगिनीकौले श्रीमत्स्येन्द्रपादावतारिते चन्द्रद्वीप-विनिर्गते द्वाविंशतितमः पटलः ॥

---

Ms.—11. निग्रहान्तं ग्रहञ्चैव ।

## त्रयोविंशतितमः पटलः।

देव्युवाच—

कौलवे योगिनी देव सञ्चरन्ति कथं भुवि।
तन्ममाचक्ष्व देवेश भक्त्या जानन्ति भूतले ॥ १ ॥

भैरव उवाच—

मर्त्येऽस्मिन् देवतानान्तु सञ्चारं शृणु भामिनि।
कपोतिका तथा गृध्री हंसी चैव नखी तथा ॥ २ ॥
खञ्जः……भाषी तु कोकाभाषी तु सुन्दरि।
उलुकी पेचकी वा तु सररी वा गूली तथा ॥ ३ ॥
शृगाली अजा महिषी (उष्ट्री) मार्ज्जारनकुली तथा।
व्याघ्री हस्ती मयूरी च कुकुटी न……॥ ४ ॥
अन्यानि यानि रूपाणि संस्थितानि महीतले।
तानि रूपाणि संगृह्य योगिन्यः क्रीडन्ते भुवि ॥ ५ ॥
निपतन्ति यदा भद्रे अभक्ष्येषु कुलाधिपे।
तद्रूपं कथ्यन्ते………युक्तावधारयेत् ॥ ६ ॥
हयश्च नखरः सर्प चिलिकोत्मानसस्तथा।
वृश्चिकोध्यन्तरश्वानो मूषको दर्दुरः प्रिये ॥ ७ ॥
ग्रहभूतस्वरूपेण ज्वालाग्निशास्त्रसङ्कटैः।
वेद……व्याधिराजानश्चैव तस्कराः ॥ ८ ॥
विद्युत्तुङ्गो तथा गण्ड व्याघ्रसिंहगजस्तथा।
अनेकाकाररूपेण भयं नानाविधं विदुः ॥ ९ ॥

चतुःषष्टिश्च योगिन्यो······प्यन्ति साधके।
एवंरूपं समास्तृत्य क्षिप्रं गृह्णन्ति तं पशुम् ॥ १० ॥
कोपन्तु नैव कर्त्तव्यं भाषमाणं सुराधिपे।
कुमारिका स्त्रियो वापि भाषमाणे कदाचन ॥ ११ ॥
यथा शक्त्या सदा कालं स्त्री चैव व्रतमास्थितम्।
पूजनीया प्रयत्नेन कुमार्य्यश्च कुलाश्रितैः ॥ १२ ॥
पुन्नागं नागचंपाद्यैर्मुचुकुन्दैश्च पाटलैः।
पारिजातोद्भवैर्दिव्यैर्दाडिमैः कुसुमोज्ज्वलैः ॥ १३ ॥
बन्धुकः कुसुमोद्भूतैश्चम्पकः कुसुमोज्ज्वलैः।
जात्युत्पलकदम्बैश्च कर्णिकारैः सिंहकेशरैः ॥ १४ ॥
अम्भोरूहैस्तथा पुष्पैः शुभैः शालाविभूषितैः।
रक्ताम्बरधरां ध्यायेद्रक्तगन्धानुलेपिताम् ॥ १५ ॥
आत्मानं योगिनीसिद्धे रत्नमाला विभूषिताम्।
ध्यायेत्तां सततं वीरां बहिः पूजां विवर्ज्जयेत्।
पूजनं कथितं भद्रे भुक्तिमुक्तिप्रसाधकम् ॥ १६ ॥

इति ज्ञाननिर्णये महायोगिनीकौले श्रीमत्स्येन्द्रपादावतारिते चन्द्रद्वीप-विनिर्गते त्रयोविंशतितमः पटलः ॥

---

## चतुर्व्विंशतितमः पटलः ।

देव्युवाच—

सफलम[द्य] मे नाथ कारुण्यं तव भैरव ।
असुराणां सुराणाञ्च प्रभुत्वमद्य मे प्रभो ॥ १ ॥
महाकौलं महाज्ञानं कुलकौलस्य निर्णयम् ।
भ्रान्तिसंसारगहनमज्ञानपटल[न्त]मः ॥ २ ॥
संसारपाशजालञ्च अद्य निर्णाशितं त्वया ।
अद्यमापादिता मुक्तिः स्वतन्त्रा भुवि दुर्ल्लभा ।
पुनः कथय कौलेश देहस्थं सिद्धपूजनम् ॥ ३ ॥

भैरव उवाच—

···सन्दिग्धं कथयिष्यामि कौलेऽस्मिन् पूजनं शृणु ।
कुलसिद्धाश्च योगिन्यो रुद्राश्चैव कुलाधिपे ॥ ४ ॥
देव्याश्चक्रगताः सर्व्वे हृदि मध्ये शिरेऽपि वा ।
बहिस्थं पूजये······पूजाविधि प्रिये ॥ ५ ॥
सुगन्धकुन्दकेतक्या मालिकाजातिकोत्पलैः ।
चम्पकैः किङ्करातैश्च नीलोत्पलसुगन्धिभिः ॥ ६ ॥
पुष्पैर्नानाविधैश्चैव शतपत्रैश्च·········।
तरुजातन्तश्च रादेया (?) द्रव्या[पि] मधुमिश्रिताम् ॥७॥
मांसम्पलम्बलिर्देया ताम्बूलं चन्द्रसंयुतम् ।
धूपचन्दनसौरभ्यं अगुरुं मृगनाभिकम् ॥ ८ ॥

---

Ms.—4. कथिष्यामि ।

रक्तपुष्पैर्विशेषेण सुगन्ध [ धूपदीपितम् ] ।
उग्राणि यानि पुष्पाणि गन्धहीनं न दापयेत् ॥ ९ ॥
बहिस्थं पूजनं प्रोक्तं अध्यात्मं शृणु साम्प्रतम् ।
रक्ताम्बरधराः सर्व्वे रक्तगन्धानुलेपनाः ॥ १० ॥
षोड़शाकृतयः स ............ विभूषिताः ।
प्रसन्नवदनाश्चैव पिबन्त्यो मदिरासवम् ॥ ११ ॥
इच्छारूपधराः सर्व्वे जरामरणवर्ज्जिताः ।
सृष्टिप्रवर्त्तकाः सर्व्वे वरदानैकतत्पराः ॥
इ......दाध्यायेदचिरान्ततसमो भवेत् ॥ १२ ॥

इति ज्ञाननिर्णये महायोगिनीकौलश्रीमत्स्येन्द्रपादावतारिते
चन्द्रद्वीपविनिर्गते चतुर्व्विंशतितमः पटलः ।

गुह्यपदधरं प्रोक्तं दशकोटिस्तु निर्णायः ।
सिद्धानां योगिनीनां च हृदयं पर(म)दुर्ल्लभम् ॥
गुह्याद् गुह्यतरं नाथे सारात् सारतरं परम् ।
सम्यगेतन्मया भद्रे अप्रकाश्यं प्रकाशितम् ॥
महाकौल महादेवि शतैर्द्दशभिः सम्मितम् ।
ज्ञानस्य निर्णये सारं नाम्ना साहस्त्रिकं मतम् ॥

इति महाकौले ज्ञाननिर्णये सारं श्रीमत्स्येन्द्रपादावता[रिते समाप्तम् ? ]

---

# अकुलवीरतन्त्रम्

## [ A ].

श्रीमच्छन्दपादकेभ्यो नमः ।

श्रीमीनसहजानन्दं स्वकीयाङ्गसमुद्भवम् ।
सर्व्वमाधारगम्भीरमचलं व्यापकं परम् ।
मायामलविनिर्म्मुक्तं मीननाथं नमाम्यहम् ॥

अथातः सम्प्रवक्ष्यामि अकुलवीरं महद्भूतम् ।
गुह्याद् गुह्यतरं गुह्यं सिद्धसद्भावसन्ततिः ॥ १ ॥
अनुग्रहाय लोकानां सिद्धनाथेन भाषितम् ।
गोपनीयं प्रयत्नेन यदीच्छन् शाश्वतं पदम् ॥ २ ॥
संसारार्णवमग्नानां भूतानां महदाश्रयम् ।
यथा नदीनदाः सर्व्वे सागरे समुपागताः ॥ ३ ॥
तथा अकुलवीरेषु सर्व्वधर्म्मा लयङ्गताः ।
सर्व्वाधारमशेषस्य जगतः सर्व्वदा प्रभुः ॥ ४ ॥
सहजानन्दं न विन्दन्ति सर्व्वधर्म्मसमास्रुताः ।
अजानन्तमलैर्ग्रस्ता महामायान्धच्छादिताः ॥ ५ ॥
शास्त्रजालेन सन्तुष्टा मोहितास्त्यजयन्तिताः [?] ।
न विन्दन्ति पदं शान्तं कौलानां निष्कलं गुरुम् ॥६॥
संवादयन्ति ये केचिन् न्यायवैशेषिकास्तथा ।
बौधास्तु अरिहन्ता ये सोमसिद्धान्तवादिनः ॥ ७ ॥

---

Ms.—सहजानन्द ; 5. सहजानन्दन्न ; 7. -त्यायवैशेषिका- ।

मीमांस पञ्चस्रोताश्च वामसिद्धान्तदक्षिणाः ।
इतिहासपुराणञ्च भूततत्त्वन्तु गारुडम् ॥ ८ ॥
एभिः शैवागमैः सर्व्वैः परोक्षश्च क्रियान्वितैः ।
सविकल्पसिद्धिसञ्चारं तत् सर्व्वं पापबन्धवित् ॥ ९ ॥
विकल्पबहुलाः सर्व्वैर्म्मिथ्यावादा निरर्थकाः ।
न ते मुञ्चन्ति संसारे अकुलवीरविवर्ज्जिताः ॥ १० ॥
सर्व्वज्ञं सर्व्वमास्पृत्य सर्व्वतो हितलक्षणम् ।
सर्व्वेषां सिद्धिस्तत्रस्था सर्व्वसिद्धिश्च तत्र वै ॥ ११ ॥
यत्रासौ अकुलवीरो दृश्यते सर्व्वतोमुखम् ।
तं विदित्वा परं रूपं मनो निश्चलतां व्रजेत् ॥ १२ ॥
शब्दरूपरसस्पर्शगन्धश्चैवात्र पञ्चमम् ।
सर्व्वभावाश्च तत्रैव प्रलीणाः प्रलयं गताः ॥ १३ ॥
भावाभावविनिर्म्मुक्त उदयास्तमनवर्ज्जितः ।
स्वभावमतिमतं शान्तं मनो यस्य मनोमयम् ॥ १४ ॥
अकुलवीरमिति ख्यातं सर्व्वाधारपरापरम् ।
नाधारलक्षभेदन्तु न नादगोचरे पठेत् ॥ १५ ॥
हृदि स्थाने न वक्त्रे च घण्टिका तालरन्ध्रके ।
न इड़ा पिङ्गला शान्ता न चास्तीति गमागमे ॥ १६ ॥
न नाभिचक्रकण्ठे च न शिरे नैव मस्तके ।
तथा चक्षुरुन्मीलने च न नासाग्रनिरीक्षणे ॥ १७ ॥
न पूरककुम्भके तत्र रेचके [च] तथा पुनः ।
न बिन्दुभेदके ग्रन्थौ ललाटे न तु वह्निके ॥ १८ ॥

---

Ms—8. पञ्चश्रोता ; 17. चक्षुमीले ।

# अकुलवीरतन्त्रम्

## [ A ].

श्रीमच्छन्दपादकेभ्यो नमः ।

श्रीमीनसहजानन्दं स्वकीयाङ्गसमुद्भवम् ।
सर्व्वमाधारगम्भीरमचलं व्यापकं परम् ।
मायामलविनिर्म्मुक्तं मीननाथं नमाम्यहम् ॥

अथातः सम्प्रवक्ष्यामि अकुलवीरं महद्भूतम् ।
गुह्याद् गुह्यतरं गुह्यं सिद्धसद्भावसन्ततिः ॥ १ ॥
अनुग्रहाय लोकानां सिद्धनाथेन भाषितम् ।
गोपनीयं प्रयत्नेन यदीच्छन् शाश्वतं पदम् ॥ २ ॥
संसारार्णवमग्नानां भूतानां महदाश्रयम् ।
यथा नदीनदाः सर्व्वे सागरे समुपागताः ॥ ३ ॥
तथा अकुलवीरेषु सर्व्वधर्म्मा लयङ्गताः ।
सर्व्वाधारमशेषस्य जगतः सर्व्वदा प्रभुः ॥ ४ ॥
सहजानन्दं न विन्दन्ति सर्व्वधर्म्मसमास्रृताः ।
अजानन्तमलैर्ग्रस्ता महामायान्धच्छादिताः ॥ ५ ॥
शास्त्रजालेन सन्तुष्टा मोहितास्त्यजयन्तिताः [?] ।
न विन्दन्ति पदं शान्तं कौलानां निष्कलं गुरुम् ॥६॥
संवादयन्ति ये केचिन् न्यायवैशेषिकास्तथा ।
बौधास्तु अरिहन्ता ये सोमसिद्धान्तवादिनः ॥ ७ ॥

Ms.—सहजानन्द ; 5. सहजानन्दम्न ; 7. -त्यायवैशेषिका- ।

मीमांस पञ्चस्रोताश्च वामसिद्धान्तदक्षिणाः ।
इतिहासपुराणञ्च भूततत्त्वन्तु गारुडम् ॥ ८ ॥
एभिः शैवागमैः सर्व्वैः परोक्षञ्च क्रियान्वितैः ।
सविकल्पसिद्धिसञ्चारं तत् सर्व्वं पापबन्धवित् ॥ ६ ॥
विकल्पबहुलाः सर्व्वैर्म्मिथ्यावादा निरर्थकाः ।
न ते मुञ्चन्ति संसारे अकुलवीरविवर्ज्जिताः ॥ १० ॥
सर्व्वज्ञं सर्व्वमास्तृत्य सर्व्वतो हितलक्षणम् ।
सर्व्वेषां सिद्धिस्तत्रस्था सर्व्वसिद्धिश्च तत्र वै ॥ ११ ॥
यत्रासौ अकुलवीरो दृश्यते सर्व्वतोमुखम् ।
तं विदित्वा परं रूपं मनो निश्चलतां व्रजेत् ॥ १२ ॥
शब्दरूपरसस्पर्शगन्धश्चैवात्र पञ्चमम् ।
सर्व्वभावाश्च तत्रैव प्रलीणाः प्रलयं गताः ॥ १३ ॥
भावाभावविनिर्म्मुक्त उदयास्तमनवर्ज्जितः ।
स्वभावमतिमतं शान्तं मनो यस्य मनोमयम् ॥ १४ ॥
अकुलवीरमिति ख्यातं सर्व्वाधारपरापरम् ।
नाधारलक्षभेदन्तु न नादगोचरे पठेत् ॥ १५ ॥
हृदि स्थाने न वक्त्रे च घण्टिका तालरन्ध्रके ।
न इड़ा पिङ्गला शान्ता न चास्तीति गमागमे ॥ १६ ॥
न नाभिचक्रकण्ठे च न शिरे नैव मस्तके ।
तथा चक्षुरुन्मीलने च न नासाग्रनिरीक्षणे ॥ १७ ॥
न पूरककुम्भके तत्र रेचके [च] तथा पुनः ।
न बिन्दुभेदके ग्रन्थौ ललाटे न तु वह्निके ॥ १८ ॥

Ms—8. पञ्चश्रोता ; 17. चक्षुमीले ।

प्रवेशनिर्गमे नैव नावाहनविसर्ज्जनम् ।
न करणैर्नासनं मुद्रैर्नामासे भिन्नतालुके [?] ॥ १६ ॥
न निरोधो न चोद्धारो नातीतां चालनं न हि ।
न प्रेर्य्यप्रेरकश्चैव न स्थानन्नैव चाश्रयम् ॥ २० ॥
न चात्मनैव तद् ग्राह्यं ग्राह्यातीतपदं भवेत् ।
एतत् पक्षविनिर्मुक्तं हेतुदृष्टान्तवर्ज्जितम् ।
सबाह्याभ्यन्तरन्तत्र एकोच्चारं चराचरम् ॥ २१ ॥
न दूरे न च वै निकटे न भरितो न च रिक्तक[ः] ।
न उन्नो न सोऽधिक एभिः पक्षैर्विवर्ज्जितम् ॥ २२ ॥
यश्च विंशात्मको ह्येष पुद्गल नास्ति यत्र वै ।
यत्र लब्धं न विद्येत अकुलवीर स उच्यते ॥ २३ ॥
यस्यैवं संस्थितं कश्चित् समरस संस्थितः ।
स ब्रह्मा सो हरिश्चेशः स रुद्रो स च ईश्वरः ॥ २४ ॥
स शिवः परमदेवः स सोमार्काग्निकस्तथा ।
स च सांख्यः पुराणाश्च अर्हन्तबुद्ध एव च ॥ २५ ॥
स्वयं देवी स्वयं देवः स्वयं शिष्यः स्वयं गुरुः ।
स्वयं ध्यानं स्वयं ध्याता स्वयं सर्व्वत्र देवता ॥ २६ ॥
यादृशेन तु भावेन पुरुषो भावयेत् सदा ।
तादृशं फलमा(व)प्नोति नात्र कार्य्यविचारणात् ॥२७॥
अस्यैव हि नामानि पृथग्भूतानि योगिभिः ।
अनाम तस्य गीयन्ते भ्रान्तिज्ञानविमोहितैः ॥ २८ ॥
धर्म्माधर्म्मसमाक्लिष्टाविकल्पतमश्छादिताः ।
तेन मुञ्चन्ति संसारं नरकं योनिसंकुलम् ॥ २६ ॥

अकुलवीरं महद्भूतं यदा पश्यन्ति सर्व्वगम् ।
स बाह्याभ्यन्तरे नित्यं एकाकारं चराचरम् ॥ ३० ॥
निस्तरङ्गं निराभासं पदभेदविवर्ज्जितम् ।
सर्व्वावयवनिर्म्मुक्तं निर्लयं निर्व्विकारजम् ॥ ३१ ॥
अदृष्टनिर्गुणं शान्तं तत्त्वातीतं निरञ्जनम् ।
सर्व्वज्ञं परिपूर्णञ्च स्वभावश्चैवमक्षयम् ॥ ३२ ॥
कार्य्यकारणनिर्म्मुक्तमचिन्त्यमनामयम् ।
मायातीतं निरालम्बं व्यापकं सर्व्वतोमुखम् ॥ ३३ ॥
समत्वं एकभूतञ्च ऊहापोहविवर्ज्जितम् ।
अकुलवीरं महद्भूतम् अस्तिनास्तिविवर्ज्जितम् ॥ ३४ ॥
न मनो न च वै बुद्धिर्न चिन्ताचेतनादिकम् ।
न कालः कलनाशक्तिर्न शिवो न च इन्द्रियः ॥ ३५ ॥
न भूते गृह्यते सो हि न सुखं दुःखमेव च ।
न रसो हि न सुखं दुःखमेव च [?] ॥ ३६ ॥
न रसो विरसश्चैव न कृतो न च जायते ।
न च्छाया न च तापस्तु न शीतो न च उष्णवान् ॥ ३७ ॥
न [दृश्यते मन] स्तत्र उदयास्तमनवर्ज्जितम् ।
न सीमा दृश्यते तत्र न च तीर्थ्यं न चैवहि [?] ॥ ३८ ॥
अद्वैतमचलं शान्तं संगदोषविवर्ज्जितम् ।
निराकुलं निर्व्विकल्पञ्च निबद्धञ्च मलक्षणम् ॥ ३९ ॥
अनाथं सर्व्वनाथञ्च उन्मना मदवर्ज्जितम् ।
अनिगूढमसन्धिश्च स्थावरं जङ्गमेव च ॥ ४० ॥

Ms.—30. सर्व्वगः ।

ज्वलज्ज्वलनभूम्या च आपोश्चैव तथैव च ।
सर्व्वं समरसं पूर्णं अकुलवीरन्तु केवलम् ॥ ४१ ॥
यस्यैषा संस्थिता मुक्तिः स मुक्तो भवबन्धनात् ।
न तस्य मातापिता [वा]बान्धवं न च देवता ॥ ४२ ॥
न यज्ञं नोपवासश्च न क्रिया वर्णभेदकम् ।
त्यक्त्वा विकल्पसंघातम् अकुलवीरलयं गताः ॥ ४३ ॥
न जपो नार्च्चनं स्नानं न होमं नैव साधनम् ।
अग्निप्रवेशनं नास्ति हेमन्तभृगु नोदनम् ॥ ४४ ॥
नियमोऽपि न तस्यास्ति नोपवासो विधीयते ।
पितृकार्य्यं न करोतीति तीर्थयात्राव्रतानि च ॥ ४५ ॥
धर्म्माधर्म्मफलं नास्ति न स्नानं नोदकक्रिया ।
स्वयं त्यज सर्व्वकार्य्याणि लोकाचाराणि यानि च ॥४६॥
समयाचारविचारश्च कृतका बन्धकानि तु ।
संकल्पश्च विकल्पश्च ये चान्ये किल धर्म्मिणः ॥ ४७ ॥
भवे योगी निराचारो पशुचारविवर्ज्जितः ।
सिद्धिश्च विविधाकारा पाताले च रसायनम् ॥ ४८ ॥
प्रत्यक्षञ्च या लब्धं न गृह्णीयात् कदाचन ।
सर्व्वञ्च पाशजालञ्च अधोमार्गप्रदायकः ॥ ४९ ॥
एतेषु मोचना नास्ति अकुलवीरविवर्ज्जिताः ।
यथा मृताः [न] जानन्ति स्वादं कटुमधुरस्य तु ॥ ५०॥
तथा अकुलवीरन्तु न जानन्ति स्वभावगम् ।
यथा मदिरा महान्तस्य कथितं नेवशक्नुते [?] ॥ ५१ ॥

अकुलवीरं न जानन्ति मोहिता त्यजन्नादिनः [?] ।
मूर्खस्यापि यथाशास्त्रं कुमारीसुरतम् इव ॥ ५२ ॥
व्यक्ताव्यक्तं न जानन्ति कथ्यमानं कुमारीषु ।
तथा अकुलवीरस्य न जानन्ति यथा स्थितिम् ॥ ५३ ॥
तावद् भ्रमन्ति मूढाश्च नराः संसारसागरे ।
यावदद्वैतकं ज्ञानममेयञ्च अनाकृति ॥ ५४ ॥
अकुलवीरं महद्भूतं गम्भीरगह्वरं महत् ।
पिण्डातीतं यदा ज्ञानमपिण्डं पिण्डवर्जितम् ॥ ५५ ॥
यो यो हि विन्दते तत्त्वं विमलं सर्व्वतोमुखम् ।
शाश्वतञ्च पदं वह्निचिह्नातीतं निरामयम् ॥ ५६ ॥
वर्जिता योगसंयोगैर्निरस्ता वासना सदा ।
जन्मजन्मसहस्राणि भक्त्या आराधितो गुरुः ॥ ५७ ॥
ते लभन्ति अकुलवीरं सुगूढं गूढगोचरम् ।
योगिनीयोगिवृन्दस्य यस्य भक्तिः सुनिश्चला ॥ ५८ ॥
तदा प्रवर्त्तते शीघ्रं स्थानं सर्व्वत्र सर्व्वगम् ।
वेदसिद्धान्तशास्त्राणि नानाविधानि यानि च ॥ ५९ ॥
तानि सर्व्वाणि मोहानि कायक्लेशपराणि च ।
विद्याहंकारपाण्डित्यैः गर्व्विताः कुगतिं गताः ॥ ६० ॥
अक्षरार्थेन सन्तुष्टा बहुशास्त्रार्थचिन्तकाः ।
अकुलवीरं न विन्दन्ति कृतकैश्च विमोहिताः ॥ ६१ ॥
गर्व्वितानां कुतो ज्ञानं ग्रन्थकोटिशतैरपि ।
कर्पूरकुङ्कुमादीनां वस्त्रताम्बूलमेव च ॥ ६२ ॥

Ms.—57. निरास्था ।

खराणां भारवाहीनां सर्व्वं तेषां निरर्थकम् ।
अकुलवीरश्च देहस्थं यदा पश्यन्ति सर्व्वगम् ॥ ६३ ॥
तदासौ योगिनी सम्यक् स एको न द्वितीयकम् ।
सुरतागतश्चैव न गच्छेत् स न तिष्ठति ॥ ६४ ॥
न भूतो न भविष्यामि स्थितिप्रलयमेव च ।
नाहं प्र[चि]तदोषैस्तु लिप्यते न कदाचन ॥ ६५ ॥
नाहं कश्चिन्न मे कश्चिन्न बद्धो न च बन्धनम् ।
नाहं किञ्चित् करोमीति मुक्त इत्यभिधीयते ॥ ६६ ॥
गच्छंस्तिष्ठन् [स्वपन्] जाग्रद् भुज्यमाने च मैथुने ।
भवदारिद्रशोकैश्च विष्ठमूत्रादिभक्षणे ॥ ६७ ॥
विचिकित्सा नैव कुर्व्वीत इन्द्रियार्थैः कदाचन ।
आचरेत् सर्ववर्णानि न च भक्ष्यं विचारयेत् ॥ ६८ ॥
एकाकी विचरेद् योगी यथारण्ये हुताशनः ।
पिण्डं बद्धात्मनः प्रोक्तं पदं मायाविमोहितम् ॥ ६९ ॥
रूपं कन्दर्पसङ्कीर्णं बद्धकाश्च विशेषिताः ।
रूपातीत न चास्तीति काष्ठयोग विवर्जितम् [?] ॥ ७० ॥
धारणैर्वाचना नास्ति अवस्था मूर्खवासना ।
सोमसूर्य्यस्तथा वह्निदहनाध्यायनन्तथा ॥ ७१ ॥
पद्मचक्रश्च शक्तिश्च आसाचोपासमेव च [?] ।
पाशस्तोभादिकं पञ्च प्रत्यया विविधास्तथा ॥ ७२ ॥
अकुलवीरस्य रक्षार्थं एतैः सर्व्वे नियोजिताः ।
भावरोमाञ्चमुत्कण्ठैः प्रत्ययानेकसङ्कुले ॥ ७३ ॥

अकुलवीरश्च विन्दन्ति कुतर्कैश्च विमोहिताः।
योऽसौ अचिन्त्यमिथ्याह सर्व्वव्यापि शरीरकम्॥ ७४॥
सर्व्वभूतस्वतमेकमद्वयं द्वयवर्ज्जितम्।
यस्य सर्व्वगतो भावं स्थिरं पूर्णं वीरन्तथा॥ ७५॥
कायंमनसि च तेनासौ चलति निष्कलम्।
न त्तितव्यं मनः कश्चिद् दया चात्र न किश्चन॥ ७६॥
यथास्तीति द्रष्टव्यं तथा दर्शितं मुश्चति।
अकुलवीरं महद्भूतमेकवीरश्च सर्व्वगम्॥ ७७॥
दुर्लभं सुरसिद्धानां योगिनीनां सुगोचरम्।
केचिद् वदन्त्ययं धर्म्ममिदं शास्त्रमिदं तपः॥ ७८॥
अयं लोको अयं मार्ग इदं दानमिदं फलम्।
इदं ज्ञानमिदं ज्ञेयमिदं विज्ञानमेव च॥ ७९॥
इदं शुद्धमशुद्धश्च इदं साध्यश्च साधकम्।
इदं तत्त्वमिदं ध्यानं नानाभावन्तु भावना॥ ८०॥
बालका बहुला लोका उद्भ्रान्ता भ्रान्तचेतसः।
ह्लाद शोकैश्च सन्तता द्रव्यपाशमनेकधा॥ ८१॥
बहु विषादमापन्ना चासन्ना हि मुहुर्मुहुः।
तावद्भ्रमन्ति संसारे विकल्पभवसागरे॥ ८२॥
यावदद्वैतकं ज्ञानं (दिव्यं) अकुलवीरं न प्राप्यते।
दग्धबीजस्य संभूति यथा नैव प्रपद्यते॥ ८७॥
मूलच्छिन्नो यथा वृक्षः प्ररोहन्नैव विद्यते।
अकुलवीरस्य वै तद्वद् [न] पुनर्भवबन्धनम्॥ ८४॥

न दोष यथा स्वर्णरसेन प्रलयङ्गतः [?] ।
तिमिरश्च यथा नष्टमादित्यकिरणाहतम् ॥ ८५ ॥
तद्वत्तु ज्ञेयसंप्राप्तं भ्रान्तिज्ञानं विनश्यति ।
अकुलवीरन्तु संप्राप्तं सर्व्वमेवं प्रणश्यति ॥ ८६ ॥
एते सर्व्वे च ये केचित् स्थाने स्थाने गुणाः स्थिताः ।
एकन्तु सर्व्वभूतेषु स्थावरे जङ्गमेषु च ॥ ८७
निर्गुणश्च गुणातीतमकुलवीरश्च केवलम् ।
सारात् सारतरं शुद्धं एतत्सद्भावसन्ततिः ॥ ८८ ॥
रहस्यं योगिसंघस्य अतिगुप्तं सुगोपितम् ।
जन्तूनां मोचनार्थाय मीननाथेन भाषितम् ॥ ८९ ॥
निर्व्विकल्पपदं यत्र असंख्येयं परापरम् ।
मोक्षतत्त्वश्च सद्भावो यत्र सर्व्वे लयं गताः ॥ ९० ॥
तथैव पुनरुत्पन्नाः पुनस्तत्र क्षयं गताः ।
अथ किं बहुनोक्तेन सर्व्वद्वन्द्वविवर्ज्जितः ॥
अकुलवीरं यदा प्राप्तं कौशिकेषु प्रयत्नतः ॥ ९१ ॥

इति महच्छ्रीमीननाथावतारे अकुलवीरपटलः प्रथमः ।

---

# अकुलवीरतन्त्रम्

## [B]

ॐ नमो गुरवे। श्रीमत्सहजानन्दं स्वसंवेद्यसद्भावसर्व्व-गम्भीरसाधनं सचराचरव्यापकं मायाजालविनिर्म्मुक्तं गम्भीर-गुरुं वन्दे।

अथातः सम्प्रवक्ष्यामि अकुलवीरं महद्भूतम्।
गुह्याद् गुह्यतरं गुह्यं सिद्धसन्तानसन्तति ॥ १ ॥
अनुग्रहार्थं लोकानां मीननाथेन भाषितम्।
गोपनीयं प्रयत्नेन यदिच्छेच्छाश्वतं पदम् ॥ २ ॥
संसारार्णवमग्नानां सारभूतमहाश्रयः।
यथा नदीनदाः सर्व्वे सागरे समुपागताः ॥ ३ ॥
तथा अकुलवीरे च सर्व्वधर्म्माः क्षयं गताः।
सर्व्वाधारमशेषस्य जगतः सर्व्वदा प्रभुः ॥ ४ ॥
अकुलवीरं न जानन्ति सर्व्वत्रैव निरर्थकाः।
मारणोच्चाटनञ्चैव विद्वेषणं तदेव च ॥ ५ ॥
ज्वरभूतग्रहाघातार्थं सावर्ण्य···नमोहणम् [?]।
न कुर्य्यात् क्षुद्रकर्म्माणि काष्ठपाषाणपूजनम् ॥
न मुद्रास्तोभकं दद्यात् क्षेत्रे पीठे च दैवतैः ॥ ६ ॥
समत्वं वीतरागत्वं समदुःखसुखं तथा।
समशत्रुञ्च मित्रञ्च समलोष्ट्राश्मकाञ्चनम् ॥ ७ ॥

---

Ms.—1. गुहातगुहतरं गुहं ; 2. अनुग्रहाथ ; गोपणीयं ; 4. सर्व्वधर्म्मात्तयं।
1—4 = A. 1—4.

अभिलाषं न कुर्व्वीत इन्द्रियार्थं कदाचन ।
समनिन्दाप्रशंसा [च] समभूतसमन्ततः ॥ ८ ॥
समदृष्टिश्च कर्त्तव्या यथात्मनि तथा परे ।
विवादं लोकगोष्ठी च कलहं द्वन्द्वसंग्रहम् ॥ ९ ॥
शास्त्रगोष्ठी न कर्त्तव्या सुभाषितकुभाषिता ।
ईर्ष्या पैशुन्यदम्भञ्च त्यजेत् सर्व्वं शनैः शनैः ॥ १० ॥
सर्व्वद्वन्द्वविनिर्म्मुक्तः सततं जनवर्ज्जितः ।
अनेनैव शरीरेण सर्व्वज्ञत्वं हि जायते ॥ ११ ॥
तन्मण्डलपुण्यधर्म्मार्थं जगृहे [?] महदाशयः ।
यत्राऽसौ तिष्ठते योगी निमिषं निमिषार्द्धकम् ।
सर्व्वतीर्थानि तत्रैव क्षेत्रपीठादिकं तथा ॥ १२ ॥
असन्तुष्टमभक्तञ्च मायामोहात्मकं तथा ।
नानादम्भ[भ]रिताश्चैते मिथ्यावाक्प्रलापिनः ।
इदञ्चैव क्रमं दिव्यं न देयमपरीक्षिते ॥ १३ ॥
यदा भवति शिष्यश्च सत्यवादी दृढव्रतः ।
अथवा कुलदृष्टस्य संक्रामेदविकल्पतः ॥ १४ ॥
मदिरोन्मत्तो यथा नित्यं स्वयमेव प्रवर्त्तते ।
सहजानन्दगतश्चैव भ्रमन्ति स्वेच्छया भुवि ॥ १५ ॥
क्षेत्रे पीठे च छन्दोहे यत्र यत्र गतास्तथा ।
येन केन तु वेशेन सत्त्वावस्थोऽपि योगिनः ॥ १६ ॥
कृमिकीटपतङ्गेषु स्थावरे जङ्गमेषु च ।
दिव्यादिव्येषु सर्व्वेषु अकुलवीरो व्यवस्थितः ॥ १७ ॥

---

Ms.—10. नैपुन्य ; 13. लानादम्भरिता ; दीयमपरीक्षते ।

न मूलोत्पाटनं कुर्य्यात् तृणस्यैव तु छेदनम् ।
भूतपीडा न कर्त्तव्या पुष्पाणाञ्च निःकृन्तनम् ॥१८॥
स्वयंपतितपुष्पैस्तु कर्त्तव्यं गुरुपूजनम् ।
मारणोच्चाटनञ्चैव निग्रहानुग्रहास्तथा ॥ १९ ॥
विज्ञाना हि वद्यमीह [?] आपादतलमस्तके ।
तत्सर्व्वं मलसंघातं पाशजालनिब[न्ध]नम् ॥ २० ॥
प्रत्यक्षे च परोक्षे च योजनानां शतैरपि ।
एवमेव न कर्त्तव्यं नान्यथा दीक्षितो भवेत् ॥ २१ ॥
अन्यथा न भवेद्दीक्षा शास्त्रकोटिशतैरपि ।
शतकोटिसहस्राणि बाह्याग्नौ होमयेद् यदि ॥ २२ ॥
एतद्विधिविहीनानां भुक्तिमुक्तिर्निरर्थका ।
पूर्व्वमेवं तु कर्त्तव्यं सर्व्वभूतहितं परम् ॥ २३ ॥
पश्चात्तं दीयते तस्य अकुलवीरमहद्भूतम् ।
स्वयंवेद्यपरं तस्य कुमारीसुरतिं यथा ॥ २४ ॥
मनसा च प्रयत्नेन निर्बन्धं सचराचरम् ।
प्रसङ्गेन च सैवात्मा तदासौ केवलं व्रजेत् ॥ २५ ॥
अन्यथा वेदशास्त्राणि ज्ञानविज्ञानमन्यथा ।
अन्यथा तत्पदं शान्तं लोकाः क्लिश्यन्ति चान्यथा ॥२६॥
इदं दिव्यं महाज्ञानं न देयं यस्य कस्यचित् ।
अलसे मुखरे क्रूरे स्तब्धे वा गुरुनिन्दके ॥ २७ ॥

---

Ms —19. पतितपुष्पेस्तु ; गुरुपूजकं ; 24. स्वयं वेद्यपरं ; 25. निवत्व ; 27. स्तब्देव्याग्रोथ (?) ।

नाना ते भवन्त्यकामी मिथ्यावादी च दुष्क्रियः ।
सर्व्वे ते कृतकैर्बद्धाः न चैव पाशच्छेदकाः ।
सर्पदुष्टो यथा मूर्खो जीवेत मन्त्र(श्च) वादतः[?] ॥ २८ ॥
विकल्परागदुष्टस्तु तथा ज्ञानेन जीवति ।
सम्यग् ज्ञानविहीनस्तु भुक्तिमुक्तिविवर्ज्जितः ॥ २९ ॥
कर्म्मबन्धनिबद्धानां मोचनी भवच्छेदनी ।
सहजा संबद्धरूपेण सबाह्याभ्यन्तरे स्थिता ॥ ३० ॥
त्रैलोक्यव्यापिनी सा तु लोकानुग्रहकारिका ।
यस्तां जानाति योगस्थः स मुक्तो मोक्षकस्तु सः ॥ ३१ ॥
ईदृशं योगिनं दृष्ट्वा अकुलवीरमयं कुतः ।
निवेदयेत् तदात्मानं विशुद्धेनान्तरात्मना ॥ ३२ ॥
तदा ग्राह्यं महाज्ञानमकुलं मूढगोचरम् ।
दुर्लभं मोक्षदातारं तत्त्वज्ञानसुदुर्लभम् ॥ ३३ ॥
अकुलवीरगतश्च स गुरुर्म्मोक्षदो भवेत् ॥
भक्तश्च ज्ञानशुद्धश्च ज्ञानेनैवावलोकयेत् ॥ ३४ ॥
अकुलं कुलरूपेण तेजोरूपं विचिन्तयेत् ।
सर्व्वं [पशु ?]वादश्च द्रव्यभावेषु संस्थितम् ॥ ३५ ॥
एतत् सर्व्वं यदा कश्चित् स्थाने स्थाने गुणाः स्थिताः ।
एकं तु सर्व्वभूतेषु स्थावरे जङ्गमेषु च ॥ ३६ ॥
जले ज्वलने तथा पवने भूम्याकाशे तथैव च ।
सर्व्वत्र रसभरितमकुलवीरन्तु केवलम् ॥ ३७ ॥
निर्गुणञ्च गुणातीतं निसन्धि निविडं घनम् ।
सारात् सारतरं शुद्धं परमामृतमुत्तमम् ॥ ३८ ॥

---

Ms.—31. कारिकाः ।

रहस्यपरमानन्दमतिगुह्यं सुगोपितम् ।
लोकानां च हितार्थाय सिद्धनाथेन भाषितम् ॥ ३९ ॥
निर्व्विकल्पं पदं शान्तं यत्र लीनं परापरम् ।
मोक्षस्य तन्महास्थानं मन्त्ररूपविवर्जितम् ॥ ४० ॥
तत्रैव सृष्टिरूपेण पुनस्तत्र लयं गता ।
किन्तेन बहुनोक्तेन सर्व्वबन्धविवर्जितम् ॥ ४१ ॥
अकुलवीरं यदा लब्धं तदा किं कौलिकैः क्रमैः ।
लब्ध्वा तु मोक्षसद्भावम् अकुलवीरं मलापहम् ॥ ४२ ॥
कौलमार्गे द्वयो सन्ति कृतका सहजा तथा ।
कुण्डली कृतका ज्ञेया सहजा समरसे स्थिता ॥ ४३ ॥
प्रेर्यप्रेरकभावस्था कृतका साऽभिधीयते ।
ततः स पातयेद् भूमौ मुद्रामन्त्रैर्नियोजितैः ॥ ४४ ॥
आहुते पतने चान्ये कर्णजापेन धूपकैः ।
एतत् साध्यमिदं तत्त्वं [एतद्] ध्यानञ्च धारणा ॥ ४५ ॥
अनेकैः कर्म्मसंघातैः नानामार्गविभावनैः ।
विकल्पकल्लोलोल्लोला उद्भ्रान्ता भ्रान्तचेतसः ॥ ४६ ॥
हृदि शोकेन सन्तप्ता व्यासङ्गाच्च महाभयैः ।
हर्षविषादसम्पन्ना शोच्यमाना मुहुर्मुहुः ॥ ४७ ॥
तावद्भ्रमन्ति संसारे कल्पाकल्पैर्भवार्णवैः ।
दग्धबीजेषु संभूतिर्यथा नैव प्रजायते ॥ ४८ ॥
मूलच्छिन्ने यथा वृक्षे न प्ररोहं विद्यते ।
अकुलवीरगतं भिन्नं नानाभावानुबन्धनैः ॥ ४९ ॥

---

Ms.—41. सृष्टिरूपेन्ना ; 44. प्रेर्ज्ज ; 45. सा॰ध्यमिदं ; 49. मूलस्थं न for मूलच्छिन्ने ; व्रीहिते for विद्यते ।

न बध्यते यथा विमले रसं विप्रलयं गतम् ।
तद्वदकुलवीरे च सत्त्वे भ्राभ्राख्य यद्गतः [?] ॥ ५० ॥
तिमिरेण यथाच्छन्नमुदिताकं न पश्यति ।
अज्ञानमनस्तद्वद् भ्रान्तिजालविमोहिता ॥ ५१ ॥
अकुले वीरे च सम्प्राप्ते सर्व्वमेतद्विनश्यति ।
दधिमध्ये यथा सर्पिः काष्ठे चाग्निः स्थितो यथा ॥५२॥
पुष्पे गन्धस्तिले तैलं वृक्षे छाया समाश्रिता ।
मद्यमध्ये यथानन्दं दीपे प्रभा समाश्रिता ॥ ५३ ॥
पद्ममध्ये च कुण्डल्या अङ्गप्रत्यङ्गमेव च ।
रक्तार्थाकुलवीरे [?] च तत्सर्व्वं विनियोजितम् ॥ ५४ ॥
भावाऽभावादिसंयुक्तैः प्रत्ययैर्दृष्टिगोचरैः ।
अकुलवीरं न जानन्ति कृतकैर्मोहितात्मनः ॥ ५५ ॥
पाशजालनिबद्धाश्च महामायाविमोहिताः ।
न जानन्ति पदं शान्तमचिन्त्यं नित्यसम्भवः ॥ ५६ ॥
सर्व्वव्यापिभावस्थं स्थानवर्णविवर्ज्जितम् ।
सर्व्वभूतस्थितं ह्येकमध्येयं ध्येयवर्ज्जितम् ॥ ५७ ॥
स च सर्व्वगतो भावः स्थिरे पूर्णे निरन्तरे ।
तत्र मनो विलीनन्तु अचलं भवतन्मयम् ॥ ५८ ॥
मनोवृद्धिस्तथा चिन्त्यं क्षिप्ता तन्मयतां गता ।
यथा तिष्ठति तत्त्वस्थः शिवनिष्कलमव्यये ॥ ५९ ॥
तदा तन्मयतां याति निर्म्मलं निश्चलं पदम् ।
अकुलवीरं महद्भुतमेकवीरं च सर्व्वगम् ॥ ६० ॥

---

Ms.—50. विद्यालयं । 45—50 = A. 79—85.

दुर्लभं सुरसिद्धानां योगिनीनाञ्च गोचरम् ।
केचिद् वदन्तीदं धर्म्मिदं शास्त्रमिदं तपः ॥ ६१ ॥
अयं लोकमिमं स्वर्गमिदं साध्यमिदं फलम् ।
इदं ज्ञानञ्च विज्ञानं शुद्धाशुद्धमिदं परम् ॥ ६२ ॥
ज्ञेयञ्च तत्त्वकूटञ्च यत्र ध्यानञ्च धारणा ।
तदासौ योगिनी ह्येकः नान्यस्तु हि द्वितीयकः ॥ ६३ ॥
[अ]नागतन्तु गतञ्चैव न गच्छेन्न च तिष्ठति ।
न भूतं न भविष्यञ्च स्थितिप्रलयवर्जितम् ॥ ६४ ॥
न चाहं प्रचितैर्दोषैः लिप्यते न कदाचन ।
नाहं कश्चिन्न मे कश्चिन्न बद्धो न च बाधकः ॥ ६५ ॥
न मुक्तो वै न च न मुक्तमे [?] मोक्षस्य च स्पृहा ।
गच्छंस्तिष्ठन् स्वपन् जाग्रद्भुञ्जानो मैथुनेऽपि वा ॥६६॥
भयदारिद्रशोकैश्च विविधैर्भक्षणैस्तथा ।
चिकित्सा नैव कुर्व्वीत इन्द्रियार्थैः कदाचन ॥ ६७ ॥
आचरेत् सर्व्ववर्णैस्तु न तु भक्ष्यं विचारयेत् ।
एवं स चरते योगी यथारण्ये हुताशनः ॥ ६८ ॥
पिण्डबधाश्च नानास्ति अवस्था मूर्खवासनाम् [?] ।
सोमशून्यस्तथा वह्निप्राणायामविवर्जितम् ॥ ६९ ॥
अप्रमेयनिराभासं धारणाध्यानवर्जितम् ।
येन जन्मसहस्राणि भक्त्या संपूजितो गुरुः ॥ ७० ॥

---

Ms.—65. चाहं प्रश्चित्यै दोषैः ; 66. गच्छत ; तिष्ठत ; 67. चिकिच्छा ; कदाचनः ; 68. सर्व्ववर्णैस्तु ।

ते लभन्ति महाज्ञानं अकुलवीरन्तु मोक्षदम् ।
योगिनीराकिणीचक्रे यस्य भक्तिः सुनिश्चला ॥ ७१ ॥
अकुलवीरं महद्भूतं गम्भीरं गहनामयम् ।
पिण्डातीतं यदा ज्ञेयमपिण्डं पिण्डवर्ज्जितम् ॥ ७२ ॥
पदव्यञ्जननिर्म्मुक्तं विमलं सततोदितम् ।
तल्लीने तन्मयात्मानं विन्दते शाश्वतं पदम् ॥ ७३ ॥
चिन्तातीतं भवेत् सो हि योगसंयोगवर्ज्जितम् ।
निर्व्वाणं वासनाहीनं तृप्तात्मा च निरामयः ॥ ७४ ॥
तेन लब्धा न सन्देहोऽमला मलच्छेदनाः ।
तस्य प्रवर्त्तते क्षिप्रं तस्यैव सर्व्वसर्व्वगम् ॥ ७५ ॥
वेदसिद्धान्तशास्त्राणि नानाविधानि शिखानि च ।
तानि सर्व्वाणि मोहानि कायक्लेशैर्निरर्थकम् ॥ ७६ ॥
विद्याहङ्कारग्रस्तास्तु गर्व्विताः कुगतिं गताः ।
अनर्थेन च सन्तुष्टा बहुग्रन्थार्थचिन्तकाः ॥ ७७ ॥
अकुलवीरं न विन्दन्ति कृतकैर्म्मोहितात्मनः ।
गर्व्वितानां कुतो ज्ञानं ग्रन्थकोटिशतैरपि ॥ ७८ ॥
कर्पूरकुङ्कुमादीनां वस्त्रताम्बूलमेव च ।
खरवद्भवति तद्भारं सर्व्वं तस्य निरर्थकम् ॥
अकुलवीरञ्च देहस्थं यदा पश्यति सर्व्वगम् ॥ ७९ ॥
धर्म्माधर्म्मफलं नास्ति नोदकं तीर्थसेवना ।
न क्रिया सत्यशौचं वा कर्म्मकाण्डे न भावना ॥ ८० ॥

---

Ms.—71. योगिनीवाकिनी ; 72. महद्भूत ; गहणामयम् ; 65—69 = A. 65—71. 76. नानाविविध ; 77. -ग्रस्था ; 79. च सु for वस्त्र ; गर्व्वगम् । 79 = A.30. 80. सोचं ;

न तस्य कर्म्मकर्म्माणि लोकाचाराणि यानि च ।
चरिताः समयाचारा जनैर्भ्रान्तिविमोहितैः ॥ ८१ ॥
अकुलवीरं न जानन्ति किं विशिष्टं कुतः स्थितम् ।
कृतका बन्धना लोके कल्पिताश्च कुपण्डितैः ॥ ८२ ॥
संकल्पविकल्पश्च कलाकर्म्माणि यानि च ।
सिद्धयो विविधा लोके पातालं च रसायनम् ॥ ८३ ॥
प्रत्यक्षश्च यदा लब्धं न विगृह्णीयात् कदाचन ।
सर्व्वे ते पाशबद्धाश्च अधोमार्गप्रदायकाः ॥ ८४ ॥
न चैतैर्म्मुक्तिः संसारे अकुलं वीरवर्ज्जिताः ।
यथा मदिरमानन्दं कथितं नैव जायते ॥ ८५ ॥
तद्वदकुलवीराख्यं स्वसंवेद्यनिरोपणम् ।
न जानन्ति नरा मूढाः सारात् सारतरं परम् ॥ ८६ ॥
तावद् भ्रान्तिविमुग्धात्मा यावत्तत्त्वं न विन्दति ।
चिन्तातीते यदा योगी स योगी योगचिन्तकः ॥ ८७ ॥
विरक्ता वासना यस्य तृप्तात्मा च निरामयः ।
तावद् भ्रमन्ति मोहात्मा नानाभावानुबन्धनैः ॥ ८८ ॥
यावत् सममेकत्वं परमानन्दं न विन्दति ।
मूर्खाणां च यथाशास्त्रं कुमारीसुरतिं यथा ॥ ८९ ॥
अकुलवीरं विन्दन्ति कथ्यमानैः कुमारिकाः ।
दिशवेशविनिर्म्मुक्तं स्थानवर्णविवर्ज्जितम् ॥ ९० ॥

---

Ms.—81. लोकचराणि ; भान्तिः । 84. कदाचनः ; 85. -विवर्ज्जिताः ।

निराकुलं निर्व्विकल्पं निर्गुणञ्च सुनिर्म्मलम् ।
अनाथं सर्व्वनाथञ्च प्रमादोन्मादवर्ज्जितम् ॥ ९१ ॥
घननिविडनि[ः]सन्धिस्थावरे जङ्गमेषु च ।
जले ज्वलने तथा पवने भूम्याकाशे तथैव च ॥ ९२ ॥
सर्व्वत्र समरसं भरितमकुलवीरन्तु केवलम् ।
तं ज्ञातं येन देहस्थं स मुक्तः सर्व्वबन्धनात् ॥ ९३ ॥
न तस्य क्रियाबन्धेन न वेद्यं न च वेदना ।
न यज्ञो नोपवासश्च न चर्य्या न क्रियोदयः ॥ ९४ ॥
न वर्णो वर्णभेदश्च अकुलवीरं यदागतम् ।
न जापो नार्च्चनाग्नीनां न होमो नैव साधनम् ॥ ९५ ॥
नाग्निप्रवेशनन्तस्य मन्त्रपूजाचरणोदकम् ।
नियमाश्च न तस्यास्ति क्षेत्रपीठे च सेवनैः ॥ ९६ ॥
न क्रिया नार्च्चनाकार्य्यैर्न तीर्थानि व्रतानि च ।
निरालम्बपदं शान्तं तथातीतं निरञ्जनम् ॥ ९७ ॥
सर्व्वज्ञपरिपूर्णश्च स्वभावेन विलक्ष्यते ।
कार्य्यकारणनिर्म्मुक्तमचिन्तितश्च अनामयम् ॥ ९८ ॥
मायातीतं निरालम्बं व्यापकं सर्व्वतोमुखम् ।
स्वदेहे संस्थितं शान्तमकुलवीरं तदुच्यते ॥ ९९ ॥
समस्तमेकदाभूतं द्वैताभावविवर्ज्जितम् ।
अकुलवीरं महद्भूतमस्तिनास्तिविवर्ज्जितम् ॥ १०० ॥

---

Ms.—92. निवड ; 94. तत् स्यात् ; 96. नाग्नि प्रोखनं ; -चरगोदक ; 98. अचिंधिश्च ; 99. निरालम्भं ।

मनोबुद्धिचित्तस्तच्चित्ता नैव स्वचेतना [?] ।
न कालकलना चैव न शक्तिश्च न चेन्द्रियः ॥ १०१ ॥
न भूते गृह्यते सो हि न दुःखं सुखमेव च ।
न रसोऽधिरसश्चैव कृतकं नैव कारकम् ॥ १०२ ॥
न च्छाया नातपो वह्निर्न च शीतोष्णवेदना ।
न दिनं रात्रिमित्युक्तमुदयास्तमनवर्ज्जितम् ॥ १०३ ॥
न मनो दृश्यते तत्र नोर्द्ध्वं मध्यं च ज्ञायते ।
अक्षोभ्यमचलं शान्तमीदृशं तत्त्वनिर्णयम् ॥ १०४ ॥
यादृशेन तु भावेन पुरुषो भावयेत् सदा ।
तादृशं फलमाप्नोति नात्र कार्य्यविचारणात् ॥ १०५ ॥
एवञ्च कुलसद्भावमवाच्यं परमामृतम् ।
अगम्यं गम्यते कस्माद् भ्रान्तिज्ञानविमोहिताः ॥१०६॥
न दूरे निकटे चैव प्रत्यक्षं न परोक्षता ।
न भरितो न रिक्तो वा निपुणो नापि चाधिकः ॥१०७॥
एतत्पक्षविनिर्म्मुक्तो हेतुदृष्टान्तवर्ज्जितः ।
कृतकैर्म्मोहिता मूढाः कर्म्मकाण्डरतास्तु ये ॥ १०८ ॥
न तेषां मुक्तिः संसारे नरके योनिसंकुले ।
अकुलवीरं महद्भूतं यदा पश्यति सर्व्वगम् ॥ १०९ ॥
सबाह्याभ्यन्तरैकत्वं सर्व्वत्रैव व्यवस्थित[म्] ।
निस्तरङ्गं निराभासं पदच्छेदविवर्ज्जितम् ॥ ११० ॥
सर्व्वावयवनिर्म्मुक्तं निर्व्विकारञ्च निर्म्मलम् ।
अदृश्यं निर्गुणं नित्यं निर्णिरोधञ्च निश्चलम् ॥ १११ ॥

न ध्यानं धारणा नैव न स्थानं वर्णमेव च ।
न रेचकं पूरकञ्चैव नरोद्घातश्च [?] कुम्भकम् ॥ ११२ ॥
न चान्तमादिमध्यस्थं न सतो वृद्धिरेव च ।
ग्राह्यग्राहकनिर्म्मुक्तग्रन्थातीतश्च यद्भवेत् ॥ ११३ ॥
एतैः सर्व्वैर्व्विनिर्म्मुक्तं हेतुदृष्टान्तवर्ज्जितम् ।
सबाह्याभ्यन्तरैकत्वं सर्व्वत्रैव व्यवस्थितम् ॥ ११४ ॥
समरसानन्दरूपेण एकाकारं चराचरे ।
ये च ज्ञातं स्वदेहस्थमकुलवीरं महद्भूतम् ॥ ११५ ॥
यस्या [?] वशं स्थितः कश्चित् समरसं रससंस्थितम् ।
स ब्रह्मा स हरिश्चैव स रुद्रश्चै[वे]श्वरस्तथा ॥ ११६ ॥
स शिवः शाश्वतो देवः स च सोमार्कशङ्करः ।
स विशाख्यो मयूराक्षो अर्हन्तो बुधमेव च ॥ ११७ ॥
स्वयं देवि स्वयं देवः स्वयं शिष्यः स्वयं गुरुः ।
स्वयं ध्यानं स्वयं ध्याता स्वयं सर्व्वेश्वरो गुरुः ॥ ११८ ॥
सर्व्वज्ञः सर्व्वमास्तृत्य सर्व्वतो हितलक्षणः ।
सर्व्वयोगिनी तत्रस्था सर्व्वे सिद्धाश्च तत्र वै ॥ ११९ ॥
सर्व्वं सर्व्वार्थिकं चैव सर्व्वज्ञानश्च तत्र वै ।
यथासौ महार्थश्च अकुलवीरमिति स्मृतम् ॥ १२० ॥
शब्दः स्पर्शो रसो रूपं गन्धो वद्याणिपम च [?] ।
सर्वे भीराश्च[?] तत्रैव ये प्रलीनाः प्रलयं गताः ॥ १२१ ॥
नाधारे ध्येयलक्ष्ये च न नादगोचरे परे ।
न हृदि नाभिकण्ठे वा वक्त्रे घण्टिकरन्ध्रयोः ॥ १२२ ॥

न इडा पिङ्गला चैव सुष्मणा च गमागमैः ।
न नाभिचक्रे कण्ठे च न शिरे बिन्दुके तथा ॥ १२३ ॥
चक्षुकर्णोन्मीलनं नैवं नासिकाग्रनिरीक्षणे ।
न पूरके कुम्भके चैव रेचके च तथा पुनः ॥ १२४ ॥
न बिन्दुभेदग्रन्थौ च ललाटे न च चन्द्रमाः ।
प्रवेशे निर्गमे चैव शिखा ऊर्द्ध्वं न बिन्दुके ॥ १२५ ॥
न करैर्न सरैर्मुद्रैः नाकाशे वायुमण्डले ।
न चापे चन्द्रसूर्य्ये च भावाभावे समागमे ॥ १२६ ॥
अनौपम्यं निरालम्बं पक्षापक्षविवर्ज्जितम् ।
अज्ञानमलग्रस्तात्मा महामायाविमोहिताः ॥ १२७ ॥
शास्त्रार्थेन विमुढात्मा मोहिता विदुषो जनाः ।
न विदन्ति पदं शान्तं कैवल्यं निष्क्रियं गुरुम् ॥ १२८ ॥
संख्यादयश्च ये केचित् न्यायवैशेषिकास्तथा ।
बौद्धारहन्ताश्च ये केचित् सोमसिद्धान्तदक्षिणाः ॥१२९॥
मीमांसा पञ्चरात्रश्च वामदक्षिणकौलिकाः ।
इतिहासपुराणानि भूततत्त्वञ्च गारुडम् ॥ १३० ॥
एते चैव समाः सर्व्वे केचित् वा[ऽपि] क्रियान्विताः ।
विकल्पसिद्धिदाः सर्व्वे तद्विदुर्न च पण्डिताः ॥ १३१ ॥
विकल्पबहुलाः सर्व्वे मिथ्यावादनिरर्थकाः ।
न ते मुच्यन्ति संसारे अकुलवीरविवर्ज्जिताः ॥ १३२ ॥
यानि कानि च स्थानानि गिरिर्नगरसागरम् ।
सर्व्वत्र संस्थितं नित्यं स्थावरे जङ्गमेषु च ॥ १३३ ॥

Ms.—123. सुस्मणा । 132. मुचन्ति ; 118 = A. 26 ; 122-126 = A. 16-19, 117—132 = A. 5-9. 136-147.

पञ्चभूतात्मकं सर्व्वं यत् किञ्चित् सचराचरम् ।
शिवाद्यदेवपर्य्यन्तं सर्व्वं तत्रैव संस्थितम् ॥ १३४ ॥
ईदृशं योगिनं दृष्ट्वा उपसर्पन्ति ये नराः ।
गन्धैः पुष्पैश्च धूपैश्च खानपानादिभक्षणैः ॥ १३५ ॥
तर्पयन्ति च ये भक्तास्त्रिविधैश्चैवान्तरात्मना ।
तेऽपि बन्धैः प्रमुच्यन्ति मुक्तिमार्गी न [?] काङ्क्षिणः ॥१३६
ब्रह्मेन्द्रविष्णुरुद्रञ्च अरहन्ता बुद्धमेव च ।
विषाख्यो मयूराक्ष [?] ये च ऋषयस्तपोधनाः ॥ १३७ ॥
देवादिभ्यो नरेन्द्राश्च ये चान्ये मोक्षकाङ्क्षिणः ।
ते [सर्व्वे] मोक्षमिच्छन्ति अकुलवीरन्तु मोक्षदम् ॥१३८॥
अथान्यं संप्रवक्ष्यामि भिन्नावस्थां स्वभावगः ।
पूर्व्वं यदुक्ता सर्व्वे अन्वयमार्गे त्वकौलिके [?] ॥ १३९ ॥

* * * * * *

* * * * नात्र संशयः ।
परमामृतसन्तृप्ताः सहजानन्दं च केवलम् ॥ १४० ॥
न जरास्तेषां न मृत्युश्च न शोको दुःखमेव च ।
सर्व्वव्याधिहरश्चैव न पुनर्भवसंभवः ॥ १४१ ॥
अकुलवीरं स्थितं दिव्यं सिद्धनाथप्रसादतः ।
सर्व्वतः सर्व्वदा शुद्धः सर्व्वतः सर्व्वदा प्रभुः ॥ १४२ ॥

इति मच्छेन्द्रपादावतारिते कामरूपिस्थाने योगिनीप्रसादाल्लब्ध[म्]
अकुलवीरं समाप्तम् ॥

---

Ms.—134, पञ्चभूतात्माकं ; lacuna to the extent of one folio—about 12 slokas,

# कुलानन्द[तन्त्रम्]

ॐ नमो भैरवाय—

कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।
परिपृच्छत्युमादेवी एकान्ते ज्ञानमुत्तमम् ॥ १ ॥
भेदनीमुत्तमभेदं यथा देहव्यवस्थितम् ।
कथयस्व पुराभेदं कुलानन्देषु चोत्तमम् ॥ २ ॥
स्थानान्तरविशेषेण विज्ञानं कथयस्व मे ।
सद्यः प्रत्ययकारकं यथा देहे व्यवस्थितम् ॥ ३ ॥
पाशस्तोभश्च वेध(न)श्च धूननं कम्पनं तथा ।
खेचरं समरसश्चैव बलीपलितनाशनम् ॥
सर्व्वं तत्तु सुरेश्वर कथयस्व मम प्रभो ॥ ४ ॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि पुरभेदं समुत्तमम् ।
एतत् कौलिकं ज्ञानं कुलानन्दे चाष्टोत्तमः ॥ ५ ॥
ब्रह्मस्थाने यत् कमलं चतुःषष्टिदलान्वितम् ।
तत्रैव मनसा रोध्य लक्षयेद्दीपशिखान् व्रती ॥ ६ ॥
पश्यति सर्व्वदेहे तु दिव्यदृष्टिर्वरानने ।
तेन लक्षितमात्रेण जायते सिद्धिरुत्तमा ॥ ७ ॥
तस्योपरि नाभिम्नदवदा [?] विचक्षणे ।
तथा चोपरितिष्ठति देवो भैरवो जगत्प्रभुः ॥ ८ ॥

---

 सर्व्वतास्तु ।

तस्याग्रे मनसारोप्य दृढभूतविचक्षणाः ।
जायते ध्वनिभिर्ज्योतिं तत्र मरुद्विशेषतः ॥ ६ ॥
एतद् विज्ञानमात्रेण आवेशं कुरुते ध्रुवम् ।
जायते परमं स्थानं नात्र कार्य्यविचारणात् ॥ १० ॥
अथान्यं परमं देवि सद्यः प्रत्ययकारकम् ।
तं प्रवक्ष्यामि हे देवि शृणुष्वायतलोचने ॥ ११ ॥
अङ्गुल्यद्वितीयं देवि यत् पूर्व्वं कथितं मया ।
तत्रैव स्थापयेद्वित्तं कथितं जायते ध्रुवम् ॥ १२ ॥
अतीतानागतश्चैव वर्त्तमानं तथैव च ।
तत्रैवोत्पादयेत् सृष्टिं तीव्रज्योतिःसमाकृतिः ॥ १३ ॥
हृदिसंस्थकमलं हित्वा मूर्ध्नि यान् प्रपूरयेत् ।
पाशस्तोभं करोत्येवं यदि विश्रमते मनः ॥ १४ ॥
अथान्यं परमं देवि दिव्यदृष्टि प्रवर्त्तते ।
ज्वलज्वालनमध्यस्थं द्विजग्रन्थि निरीक्षयेत् ॥ १५ ॥
तत्रैव मनसा रोध्य चूलिकाग्रन्तु मानयेत् पुनः ।
सृष्टिं प्रवर्त्तन्ते देवि नात्र कार्य्यविचारणात् ॥ १६ ॥

देव्युवाच—

तद्वेधश्च शुद्धसारश्च हितं मया न प्रकाशितम् ।
कथयस्व विशेषेण यथा जानामि तत्क्षणात् ॥ १७ ॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि वेधसारं यथाक्रमम् ।
ब्रह्मस्थाने ··पद्मं चतुःषष्टिदलान्वितम् ॥ १८ ॥

---

Ms.—14. पाशस्ताभं ।

तत्रैवोत्पादयेत् सृष्टिः दण्डाकाराग्नितेजसा ।
भेदयित्वा महाग्रन्थिं द्विचक्रञ्च तथैव च ॥ १९ ॥
मूर्ध्नि कमलसंस्थानं ज्वलनाकारं विचिन्तयेत् ।
चलन्तं भ्रामयेत्तेन नियतं तु महीतले ॥ २० ॥
बेधये गिरिवृक्षाणि किं पुनः क्षुद्रजन्तवः ।
अथान्यं परमं देवि विज्ञानं भद्रकं शृणु ॥ २१ ॥
भ्रुवोश्चक्षुर्मध्यस्थं च कालावुना [?] ···विचिन्तयेत् ।
यावद्विभ्रमते नित्यं भ्रमते चक्रवत् शिरः ॥ २२ ॥
दुराश्रवणविज्ञानं भूतदेतस्य [?] चिन्तयेत् ।
वामस्रोतं तु यावत् तीव्रतेजसमप्रभम् ॥ २३ ॥

देव्युवाच—

बलीपलितक्षयं देव त्वया ख्यातं ममाग्रतः ।
एतन्मे संशयो देव कथयस्व मम प्रभो ॥ २४ ॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि यत् सुराणामपि दुर्लभम् ।
द्वात्रिंशतिदलं पद्मं तिष्ठति तन्मूर्ध्नि मध्यतः ॥ २५ ॥
तत्रैव भावयेदमृतं कलाषोडशसमन्वितम् ।
हृच्चक्रं पातयेद्वारं [?] यावदानाभिमण्डलम् ॥ २६ ॥
चिन्तयेत् कृष्णवर्णञ्च भेदं तु सकलं पुरः ।
पलितास्तम्भयेद्देवि मासमेकेन सुव्रते ॥ २७ ॥
अथान्यं परमं देवि गुह्यसंशयस्थितिकारकम् ।
यत्र चतुष्पथस्थानं तत्र सर्व्वासुरालयम् ॥ २८ ॥

---

Ms.—26. -द्वारं ।

तत्रैव स्थापयेच्चित्तं दिव्यबालप्रवर्त्तत [?]।
अश्रुतां वदते बालां···दिव्य वरानने ॥ २९ ॥
विषप्रहारं कुरुते ज्वरव्याधिं विनाशयेत् ।
ततः परतरं स्थानं तत्र सर्व्वं प्रवर्त्तते ॥ ३० ॥
अथान्यं परमं देवि दुरावेधं वदाम्यहम् ।
ज्वलज्ज्वलनसंध्यस्थं तत्रैव लक्षयेद्देवि ॥ ३१ ॥
तं त्रितकोटिसमप्रभा ऊर्द्ध्वं शक्ति निपातान्यतः [?]।
बेधयेद्विचक्षणः बेधयित्वा तु तं लक्षयेत् ॥ ३२ ॥
ज्वलनाकाष्ठप्रभां ऊर्द्ध्वशक्तिं चक्रयित्वा अचलं
भ्रामयेत् पुनः [?]।
बेधयेत् सा मनःसहस्राणि समकानि तु का कथा ॥३३॥
एवं ज्ञात्वा वीरारोहे विचरेत यथासुखम् ॥
देवासुरमनुजानां दुर्लभो भवति साधकः ॥ ३४ ॥

देव्युवाच—

धूननं कम्पनं देव यथाख्यातं ममाग्रतः ।
ततश्चापि संशयो देव कथयस्व मम प्रभो ॥ ३५ ॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि धूननं कम्पनं स्थितम् ।
या सा महावहा नाडी कुचेल्याकारसंस्थिता ॥ ३६ ॥
तत्रैवोत्पादयेत् दृष्टिर्दण्डाकारसुतेजसा ।
हृच्चक्र ··· ··· ··· तीव्रशक्ति सुविग्रहा ॥ ३७ ॥
धूननं कम्पनं चैव नात्र कार्य्यविचारणात् ।
अथान्यं परमं देवि खेचरत्वं शृणु प्रिये ॥ ३८ ॥

Ms.—29. स्थापये ; 32. लक्षयत् ; 35. धनुनं ।

या सा महावहा ना[डी] कुण्डल्याकारसंस्थिता ।
पदद्वन्द्वगता सा तु मूर्ध्निस्थं कमलं पुनः ॥ ३९ ॥
या वीरतये तज्ज्वलनाकारं सुभावयेद्बुधः ।
सर्व्वशक्तितो मध्यत खेचरत्व भवेद्ध्रुवः
नवाहमभृतं ददैतः [?] ॥ ४० ॥

अथान्यं सम्प्रवक्ष्यामि महाव्याप्तिं वरानने ।
यावद्···स्थानेषु ख्याता तस्य मयाग्रतः ॥ ४१ ॥
तथैव मनसारोप्यं नासाग्रे पवनमानेन ।
मनसं तत्त्व बेधयित्वा निष्कलं योजयेद्बुधः ॥ ४२ ॥
महाव्याप्तिर्भवेद्देवि तवाहमनृतं वदेत् ।
अथान्यं सम्प्रवक्ष्यामि येन सिद्धिर्भवेत् ध्रुवम् ॥ ४३ ॥
वर्गातीतस्य द्वितीयमनुलोम न सुव्रते ।
ज्वलनारूढं कृत्वा चतुर्थं स्वरसंयुतः ॥ ४४ ॥
बिन्दुमस्तकसम्भिन्नमादौ योजयेद्बुधः ।
वर्गातीतं पुनर्देवि षष्ठस्वरविभूषितः ॥ ४५ ॥
स शिखे स्वरबिन्दुसंयुक्तं योजयेद्देवि तत् पुनः ।
यकारस्य पञ्चमं गृह्य तं तृतीयस्वरसमन्वितम् ॥४६॥
स्वरं द्वितीयसंयुक्तं कारयेत् पुनः प्रियः ।
वर्गस्य प्रथमं बीजं स्रष्टेराद्यतो योजयेत् ॥ ४७ ॥
एतद्देवि समाख्यातं कुलविद्यासमन्वितम् ।
नित्यं तु योजयेद्देवि एकचित्तस्तु पण्डितः ॥ ४८ ॥

---

Ms.—39. पदद्वन्य ; 41. यावद्वों- (?) ; 42. निष्कल ; 45. वग्रातीतं ; 48. समाख्यातां ।

तस्य सर्व्वा भवेत् सिद्धिः सर्व्वज्ञानेषु सुन्दरि ।
न खेदयामि कस्य चित्तं शिष्येऽप्युक्त्वा वरानने ॥४९॥
अथान्यं परमं देवि कामेन विह्वलकारकम् ।
भगस्य मध्यस्थ भगमधो हुताशनम् ॥ ५० ॥
प्रेरितः पवनः शक्त्या ज्वलनाकारतेजसा ।
विसन्तु चिन्तयेद्देवि सृष्टिकमलन्तु यावत् ॥ ५१ ॥
श्रवणं चिन्तयेदमृतं तेजोमार्गेण योगिनि ।
भवन्ति विह्वला नार्य्यः क्षणमेकेन सुव्रते ॥ ५२ ॥
अथान्यं परमं देवि फलपुष्पाकथनं च ।
शृणुयात् परमादेवि अघोरविक्रमा ॥ ५३ ॥
आकर्षयेद्बुधो वायुं पिण्डस्थं रूपणमुच्यते ।
चक्षुषा योजयेद्देवि फलपुष्पन्तु चिन्तयेत् ॥
तेजसाकर्षयेत् तु···चित्तं सुसर्य्यतः ॥ ५४ ॥

देव्युवाच—

सर्व्वं तु मया ज्ञानं भाषितं देव तत् पुरा ।
अद्यापि संशयो देवि कथयस्व मम प्रभो ।
संगमान्मोक्षहेतुकं * * ॥ ५५ ॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि यत् सुरैरपि दुर्लभम् ।
आसनं तु स्थितं कृत्वा···विश्व अनिवृत्तः ॥ ५६ ॥
अभावं भावयेद्देवि सर्व्वभावविवर्ज्जितम् ।
चित्तं तत्र स्थितं कृत्वा खमध्ये विनियोजयेत् ॥ ५७ ॥

---

Ms,—49. सर्व्व ; सिद्धि ; सुन्दरीः ; चित्त ; 53. शृणुयात ; 54. रूपणरूच्यते ।

भावयेत् समरसं देवि प्रभुभृत्यं विचक्षणः ।
एतद्विज्ञानमात्रेण गीयते तत्र मध्यतः ॥ ५८ ॥

दूराश्रवणविज्ञानं बेधस्तोभं मध्यतः ।
आवेशं दर्शनं दूरात् कम्पस्तोभं तथैव च ॥ ५९ ॥

परकायप्रवेशेन सम्प्रवर्त्तेत योगिनः ।
... ... ...तदभ्यासेन सुव्रते ॥ ६० ॥

इति मत्स्येन्द्र-पादावतारितं कुलानन्दं समाप्तमिति ॥
शुभमस्तु सर्व्वजगताम ।

---

# ज्ञानकारिका

## प्रथमः पटलः

ॐ नमः शिवाय। सिद्धेभ्यो पुरुषेभ्यो नमः। श्रीशङ्कर-पादेभ्यो नमः। अप्रतिहततत्त्वेभ्यो नमः।

अथातः संप्रवक्ष्यामि ज्ञानसर्व्वं [सु]भाषितम्।
कारिका श्री[ज्ञाना]ख्यातं विसर्ज्ज ज्ञानकारिका[म्] ॥१॥
कारिकानाम विज्ञानं श्रूयन्ते च…वल।
साम्प्रतं कथयिष्यामि योगिनां युक्तकारणम् ॥ २ ॥
मुक्तिमार्गी च [सर्व्व]तो सर्व्वेन्द्रियविवर्जिताः।
पञ्चपञ्चविनिर्मुक्तो……वर्ज्जितम् ॥ ३ ॥
एते सुरास्तं ज्ञानं मुक्ति…वान् यथास्थितः।
सर्वव्या[धि]विनिर्मुक्तं यच्च इन्द्रियगोचर[म्] ॥ ४ ॥
द्वादशान्तं तथा………शान्तं तथैव च।
द्वादशान्तं कलाशतं वर्णाक्षरविवर्ज्जितम् ॥ ५ ॥
सर्व्वज्ञश्च सदा शान्तं [सर्व्वा]श्रवविवर्ज्जितम्।
ब्रह्मा विष्णुस्तथा रुद्र ईश्वरः शिव एव च ॥ ६ ॥
मूर्त्तिरूपं स्थितं हेतुरनुत्तरं यथास्थितः।
रूपकायः सदातीतं मन्त्रतन्त्रावबर्ज्जितम् ॥ ७ ॥
आत्मापरविनिर्मुक्तं पक्षातीतं श्रयम्।
*  *  *  *  लक्षणा ॥ ८ ॥

---

Ms.—3. विवर्जिता ; 4. यच्चा इन्द्रीतगोचर ; 5. द्वादशातं ; 8. आत्मापरिविनिर्मुक्तं ; यक्षतीतं।

सर्व्वद्वन्द्वविनिर्मुक्तं निश्चितन्तु निराकुलम् ।
साकुलत्वं यदा चित्तं विषयासक्तचेतसाम् ॥ ९ ॥
तदा भ्रमन्ति संसारं मायामलविमोहिताः ।
एतद्द्वन्द्वसमाख्यातं संसारस्य तु निर्णयम् ॥ १० ॥
साम्प्रतं कथयिष्यामि मुक्तिस्तदस्तु दुर्ल्लभम् ।
येन विज्ञानमात्रेण मुक्तिर्भवति योगिनाम् ॥ ११ ॥
सर्व्वसंसाररहित-मुक्तिश्चैव निराकुलम् ।
निश्चितं निश्चलं साम्यं निर्द्वन्द्वं च निराकुलम् ॥ १२ ॥
भवेन् मोक्षो नराणाञ्च द्वन्द्वभावविवर्जितम् ।
निश्चित्तं चित्तरहितं कारिकाज्ञानमुत्तमम् ॥ १३ ॥
एतद्भेदं मयाख्यातं मोक्षस्यैव तु निर्णयम् ।
सर्व्वाश्रयविनिर्म्मुक्तं चित्ताश्चै[व] निराश्रयम् ॥ १४ ॥
चित्ताश्रयं भवेद्धर्म्मं निराश्रयं मोक्षदं स्मृतम् ।
देवो देवी तथान्यश्च धर्म्माधर्म्मविवर्जितम् ॥ १५ ॥
धर्म्माधर्म्माश्रयं प्रोक्तं संसारस्य तु बन्धनम् ।
आश्रयं बन्धमित्युक्तं मुक्तिश्चैव निराश्रयम् ॥ १६ ॥
निराश्रयं भवेत्तत्त्वमचिन्त्यमुक्तिलक्षणम् ।
विषयावस्थं यदा चित्तं द्वन्द्वमुक्तिविवर्जित[म्] ॥ १७ ॥
तदा भ्रमति संसारं यत्तं निश्चयतालयः ।
मनोऽवस्थाविनिर्म्मुक्तं यावत्तं चञ्चलीभवेत् ।
कथन्तं निश्चलं देवि ज्ञातव्यं ज्ञानकारिके ॥ १८ ॥

इति ज्ञानकारिकायां मोक्षाधिकारः प्रथमः पटलः ।

---

Ms.—11. भवि स योगिना ; 13. नरातश्च ; 14. मोक्षश्चैव ; 17. विषयवस्था ।

# द्वितीयः पटलः

अतः परं प्रवक्ष्यामि ज्ञानं त्रैलोक्यदुर्लभम् ।
कारिकातत्त्वसद्भावं सिद्धनाथकुलोद्भवम् ॥ १ ॥
चन्द्रसूर्य्यविनिर्म्मुक्तं द्वारणाद्यविवर्ज्जितम् [१] ।
पृथिव्यापस्तं तथा योगी वायुराकाशमेव च ॥ २ ॥
पञ्चभिराहेतो देहो श्रूयते तत्त्वनायके ।
सर्व्वेषां व्यापकः शान्त व्याप्ती तस्य न विद्यते ॥ ३ ॥
व्यापकत्वे स्थितः साक्षाद्यथा क्षीरेषु सर्पिषः ।
कथितं तत्त्वभिर्वस्तु ज्ञानरत्नं सुदुर्लभम् ॥ ४ ॥
आत्मापरविनिर्म्मुक्तं चित्तं चैव निराश्रयम् ।
चित्ताश्रयं भवेद्द्वन्द्वं निराश्रयञ्चमोषदम् [?] ॥ ५ ॥
मनसस्तु विधं प्रोक्तं राजसन्तामसन्तथा ।
सात्त्विकन्तु तृतीयञ्च त्रिभिर्धर्म्मेण लक्षणम् ॥ ६ ॥
तामसं चञ्चलं क्षुद्रं राजसङ्गतिरागतिः ।
सात्त्विकं तृतीयं ज्ञेयं धर्म्मयुक्तं सदा स्थितम् ॥ ७ ॥
चतुर्थन्तु मनश्चैव कथयामि विशेषतः ।
गुणत्रयविनिर्म्मुक्तं सदा निर्व्वाणलक्षणम् ॥ ८ ॥
उत्तमोत्तमचतुर्थन्तु येन संशुद्धचेतसा ।
सर्व्वाग्निविनयातीतमिन्द्रियातीतमव्ययम् ॥ ९ ॥
अनाभ्यासं सदा तत्त्वं सर्व्वचिन्ताविवर्ज्जितम् ।
चित्ताभावविनिर्म्मुक्तं निमित्तं तत्त्वलौकिकम् ॥ १० ॥

अभावं भावनातीतं चित्ताचित्तविवर्जितम् ।
चित्ताद्यचिन्तितं ज्ञानमवाच्यज्ञाननिर्णयम् ॥ ११ ॥
यथैव सदात्युक्ताः तावच्चित्तं सुचञ्चलम् ।
चञ्चलं भावमित्युक्तमचलं मुक्तिलक्षणम् ॥ १२ ॥
चित्तायुक्तं यदा चित्तं तदासौ चञ्चलं स्मृतम् ।
चित्तातीतं यदा चित्तं निश्चितमचलं भवेत् ॥ १३ ॥
सर्व्वचिन्ताविनिर्म्मुक्तमभावे निश्चलं भवेत् ।
न योगाध्यातचित्तस्तु न च लक्षणसाधकम् ॥ १४ ॥
न निरोधो भवेत् तत्र न कायशून्यमेव च ।
न बहिरन्तमन्तस्थं न चान्त आदिमध्यगः ॥ १५ ॥
न तेजो वायुराकाशं पृथिव्या आपभावना ।
न बुद्धिर्न चाहंकारो न मन इन्द्रियो न च ॥ १६ ॥
न चित्ताचित्तकस्तत्त्वं चिन्तातीतं स्थितं सदा ।
न चिन्ता यस्तु विज्ञेया ज्ञातव्य कालशासनः ॥ १७ ॥
यो सो निश्चिन्तसर्व्वज्ञः समाधिपरमेश्वरः ।
ज्ञातव्यं मोक्षसद्भावं गुप्तभेदप्रकाशितम् ॥ १८ ॥
संसारार्णवनिर्म्मुक्तं कल्पनातीतगोचरम् ।
निर्विकल्पं सदा ज्ञानं कथितं ज्ञानकारिकम् ॥ १९ ॥
चेतनाचेतना चैव कल्पना भावनास्तथा ।
धारणाधरविन्यासचन्द्रसूर्य्याग्निमण्डले ॥ २० ॥
वायुराकाशस्तथा सृत्याः ब्रह्मा रुद्रादिदेवताः ।
सर्व्वे ते कल्पना प्रोक्तं निर्व्विकल्पस्तथान्यथा ॥ २१ ॥

---

Ms.—30. ज्ञानमवाक्य- ; 33. भवे ; 37. मोक्त ; -स्तद्भावं ।

कल्पनाज्ञानयुक्तास्तु भ्रमन्ति घटयन्त्रवत् ।
परिपूर्णं कथं तेषां सिद्धक्रमविवर्ज्जितम् ॥ २२ ॥
पतन्ति क्षिप्रं संसारे चित्तज्ञानेन रञ्जितः ।
न यान्ति चेह संसारे ये स्थिता उत्तमं पदम् ॥ २३ ॥
नरके गमनन्तस्य न स्वर्गे गमनन्तथा ।
पाशद्वयविनिरूपस्तु धर्म्माधर्म्मनिबन्धने ॥ २४ ॥
ज्ञानखड्गेन छित्वा पाशद्वयनिबन्धनम् ।
अन्धपाशं यदा चित्तं कुतो गच्छन्ति योगिनः ॥ २५ ॥
धर्म्माधर्म्मद्वयः पाशो पतन्त्युत्पतन्ति च ।
तेन पाशेन बद्धस्तु भुञ्जते कर्म्मसञ्चयम् ॥ २६ ॥
धर्म्मेण भुञ्जते स्वर्गमधर्म्मं नरकादिषु ।
धर्म्माधर्म्मौ तु द्वौ योऽसौ त्रैलोक्यस्य निबन्धनम् ॥२७॥
धर्म्माधर्म्मं यदा त्यक्तं क्षिप्रं मुञ्चन्ति मानवाः ।
धर्म्मा चैव अधर्म्मा द्वौ द्विविधं परिकीर्त्तितम् ॥ २८ ॥
सबा[ह्य]भ्यन्तरचेतः धर्म्माधर्म्मप्रतिष्ठितम् ।
अध्यात्मजातसद्भावं योगिनामेव संस्थितः ॥ २९ ॥
लौकिकास्थलकर्म्मश्चाध्यात्मकस्येदं सूक्ष्मम् ।
आध्यात्मिके चैव धर्म्माधर्म्मस्थितिः सदा ॥ ३० ॥
ऊर्द्ध्वचारो भवेद्धर्म्मोऽद्धयस्योऽधर्म्मलक्षणम् ।
धर्म्माधर्म्मक्षये क्षीणे मुच्यते सर्व्वैर्धनैः [?] ॥ ३१ ॥
धर्म्माधर्म्मद्वयं ज्ञात्वा पुनर्ज्ञानमवाप्नुयात् ।
धर्म्माधर्म्मविचारोऽयं कथितं ज्ञानकारिकैः ॥ ३२ ॥

इति ज्ञानकारिकायां धर्म्माधर्म्मविचारो नाम द्वितीयः पटलः ॥

---

Ms.—42. क्षिप ; उत्तम ; 45 पतन्ति द्वात् पतन्ति च ।

## तृतीयः पटलः

अथ चर्य्यान् [प्र]वक्ष्यामि योगिनामुपजायते ।
स चेताज्ञान न सर्व्वः चैतन्यं ज्ञानवर्जितम् ॥ १ ॥
चेताचेतसमायुक्तं ज्ञानत्वं सम्प्रकीर्त्तितम् ।
भुक्तितत्त्वं यदा चेतं स चेत्तम्मुक्तिलक्षणम् ॥ २ ॥
चेताचेतसमायुक्तं चैतन्यं शाश्वतं पदम् ।
योगिनां योगचिन्तितमार्य्यसंज्ञानवर्जितम् ॥ ३ ॥
यो मार्गविनिर्म्मुक्तं योगिनां मुक्तिलक्षणम् ।
एकलिङ्गे श्मशाने वा नदीनां सङ्गमेषु च ॥ ४ ॥
शून्यागारे गुहावासे वृक्षमूले तु चत्वरे ।
महोदधितटे चैव त्रिपथे वापि साधकः ॥ ५ ॥
नग्नास्ते मुक्तकेशास्तु मदिरानन्दचेतसः ।
मालानिर्म्मीलिता योगी एकाकी भ्रमते सदा ॥ ६ ॥
लिङ्गन्तु कथयिष्यामि यल्लिङ्गं कौलिकं स्मृतम् ।
लयपूजाष्टकं यत्तं लिङ्गन्तु स चराचरम् ॥ ७ ॥
लय वै यानि सर्व्वेषां तेन लिङ्गं मुदा कृतम् ।
एतत् कौलिकं यल्लिङ्गं न शैलहेमरौप्यजम् ॥ ८ ॥
कथितं देहजं लिङ्गं एकन्तु न द्वितीयकम् ।
एकलिङ्गं समाख्यातं श्मशानं कथयामि ते ॥ ९ ॥

---

Ms.—55. पदानी स··षु च ; 56. गुहावाणे ; 58. कौलिका ; 59, एन कोलियकल्लिङ्गं ; 60. एकस्तु ।

शोभते च यदा देहः सर्व्वेषां एकदेहिनाम् ।
निस्वासस्वाससंयुक्तं श्मशानं परिकीर्त्तितम् ॥ १० ॥
अधोर्द्ध्वं प्राणसञ्चारः वहते चैव नित्यशः ।
ऊर्द्ध्वचारे भवेद् गङ्गा यत्ना[?] चाधो व्यवस्थितः ॥११॥
द्वाभ्यां मेलापकं यत्र स न मेतत् [?] प्रकीर्त्तिता ।
अशरीरं यदा तत्त्वं स्वदेहे सा स्थिता यदि ॥ १२ ॥
शून्यं निरञ्जनं ज्ञात्वा मुच्यते नात्र संशयः ।
गुह्यं तु कथयिष्यामि गुह्ये सचराचरम् ॥ १३ ॥
गुह्यं शरीरमित्युक्तं वासितं ज्ञानराशिना ।
गुह्यावासं स्थितो योगी चर्य्या तस्य न उच्यते ॥ १४ ॥
वासस्तु कथितं दिव्यं वृक्षमूलं शृणु तथा ।
वृक्षः शरीरमित्युक्तं पादादिकरशाखयोः ॥ १५ ॥
ऊर्द्ध्वमूलं भवेद्वृक्षं मूलवे [?] वृक्षधारकम् ।
वृक्षमूलं ततो ज्ञात्वा बाह्यवृक्षस्य वर्ज्जितम् ॥ १६ ॥
वृक्षमूलं समाख्यातं चत्वारः शृणु साम्प्रतम् ।
जया च विजया चैव अजिता चापराजिता ॥ १७ ॥
चतुःशक्तिसमोपेतं चत्वारं मात्रकोद्भवम् ।
चत्वारं कथितं दिव्यं महोदधितटः शृणु ॥ १८ ॥
बिन्दुस्तश्च पराशक्तिः तटस्थः चारुरूपिणी ।
बिन्दुचारुस्थिता नित्यं तटस्थं बिन्दुमण्डलम् ॥ १९ ॥
तटस्थश्च स्थिता योगी तटं चैव प्रकीर्त्तितम् ।
चन्द्रं त्यक्त्वा यदा याति आधारं सूर्य्यमण्डलम् ॥ २० ॥

---

Ms.—62. यत्ना ; 65. ज्ञानवाशिना ; 68. सांप्रदं ; 70. टटस्थः ।

सूर्य्यं त्यक्त्वा यदा याति व्योमाऽस्तु चन्द्रमण्डले ।
गगनमास्थितो [?] नित्यं वेला इव महोदधेः ॥ ७२ ॥
एतद्वेला समाख्यातम् अध्यात्मैव प्रतिष्ठितम् ।
नास्थिरं भवति श्वासं बहिस्थं मनरञ्जितम् ॥ ७३ ॥
अथिरं सर्वयोगिनां प्रवाहं वहते सदा ।
प्रवाहं गमनश्चैव गमनागमनं पुनः ॥ ७४ ॥
गमनागमनसंयुक्तो वेलाऽस्मिन् यथा स्थितम् ।
गमागम यथा वेला नास्ति रञ्जित कश्चित् [?] ॥ ७५ ॥
गगनोपमं स्थितं जगत् भावन्निश्चलतां व्रजेत् [?] ।
महोदधितटे स्थित्वा उदधि कथितं ततः ॥ ७६ ॥
निश्चलं परिपूर्णत्वं महोदधि स्मृतम्···।
योगिनां चर्य्यसद्भावं कथितं तत्त्वं विशेषतः ॥ ७७ ॥
महोदधि समाख्यातं त्रिपञ्चकं कथयाम्यहम् ।
सत्त्वरजस्तमश्चैव एकत्वे तु यथा स्थितम् ॥ ७८ ॥
त्रिपथं तु विनिर्मुक्तं शास्त्रतो ज्ञानकारिका ।
त्रिपथं तु समाख्यातं नग्नन्तु कथयामि ते ॥ ७९ ॥
अविद्या···पत्यत्काल[?] [न]ग्नकं च साधकेश्वरम् ।
नग्नस्तु कथितान् देवान् मुक्तकेशन्ततः शृणु ॥ ८० ॥
केशस्तु पाशमित्युक्तं मुक्तिमार्गप्रबन्धकम् ।
धर्मस्तु नैकेन पाशश्चैव विशेषतः ॥ ८१ ॥
षड्भिर्मुक्तो यदा योगी मुक्तकेशः स उच्यते ।
मुक्तकेशः समाख्यात आनन्दं शृणु साम्प्रतम् ॥ ८१ ॥

72. गणगमास्थितो ; 75. गमनाद्गमन ; 76. गणगमं स्थितजागत ;
80. [न]ग्नके.

योगपारगतो योगी महापारविवर्जितः ।
पानयोगामृतं दिव्यं योगिनां सम्प्रकीर्त्तितम् ॥ ८३ ॥
एभिर्युक्तो महायोगी मदिरामत्त उच्यते ।
मदिरानन्दमाख्यातं नैर्माल्यमालिनो [?] शृणु ॥ ८४ ॥
वर्णं चैवास्ति मालाग्रं संस्थितो शक्तिसूलके ।
माला चैव समाख्याता योगिनां चान्यकारणम् ॥
नैर्माल्यमालिनो योगी योगचर्यां करोति सः ॥ ८५ ॥
एकाकीमतिथिर्यस्तु भ्रमिते प्रवदेत् सदा ।
असंहायो भ्रमते धीरः स एकाकीनमुच्यते ॥ ८६ ॥
एकाकी तु समाख्याता शास्त्रं मिलकारिका [?] ।
एतच्चर्या समाख्याता विश च ज्ञानधारक [?] ॥ ८७ ॥

इति ज्ञानकारिमहामच्छिन्द्रनाथपादावतारितेनोक्तं
चर्याधिकारस्तु तृतीयः पटलः ॥

---

84. न माल्यमालिनो ; 85. शक्तिसूलकः.

# Index of the Verses

## ( I )

## कौलज्ञाननिर्णयः

[ *The numbers refer to the pages* ]

# अकुलवीरतन्त्रम्

( B within brackets refers to *Akulavīra-Tantram* B and the rest to A. )

## कुलानन्द(तन्त्रम्)

# ज्ञानकारिका

# Index of Technical Words

[ *The numbers refer to the pages and verses* ]